श्रीसद्गुरुभ्यः सादरभावम्
उपायनीकुरुते —
# श्रीमातृप्रत्यभिज्ञा
## ( कारिकावली )

कमलेशझाः
11.09.2019

विद्यावाचस्पति प्रोफेसर कमलेशझा

**शारदा प्रकाशन**
वाराणसी

॥ श्रीः ॥



चर्माम्बरं त्रिशूलं च भस्मनो लेपनं शिवे।
भिक्षाटनेन यस्याःसंशोभते नटनं तथा।।
परेशस्य समप्राणितोषणेन बृहत्फलम्।
अन्नपूर्णेऽम्ब! तान्नौमि जगतो मातरं श्रियम्।।

# समर्पणम्

श्रीमातृप्रत्यभिज्ञाग्रन्थरत्नं
श्रीमदन्नपूर्णाविश्वेश्वराभ्यां
श्रद्धातिशयेन समर्पयन्
चिदानन्दप्रकर्षमनुविन्दन्
नमामि साम्बं
शिवमेतयोर्दासोऽहम् ॥



श्रीचन्द्रशेखरशिवो गुरुतत्त्वदर्शी
पूज्यो विदां सकलशास्त्रविमर्शजुष्टः।
सज्ज्ञानपीठक - जगद्गुरुचक्रवर्ती
श्रीलो बुधो विजयते शिवभक्तिचञ्चुः॥

## ॥ शुभाशंसनम् ॥

**यस्योर्मिबुद्बुदाभासः षट्त्रिंशत् - तत्त्वसंचयः।**
**निर्मलं शिवनामानं तं वन्दे चिन्महोदधिम्॥**

पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्वेताश्वतरश्रुत्या भगवतः शिवस्य परमानन्दस्वरूपिणी शक्तिर्जगदम्बा नमस्या। ज्ञानशक्तिसंवलिताया अस्याः उत्पन्नं **शिवतत्त्वं** निमित्तकारणं चेत् क्रियाशक्तिसंवलितायास्त्वस्याः समुत्पन्नं **शक्तितत्त्वम्** उपादानकारणं भवतीति सदाशिवादीनां पृथिव्यन्तानां समुत्पत्तौ शम्भोर्विश्वभावनी पराशक्तिः स्तुत्यस्वरूपा जयति। सेयं शम्भुधर्मचारिणी षट्त्रिंशत्-तत्त्वमध्ये निवृत्त्यादि - पञ्चविधकलारूपेण स्थूलसूक्ष्मादिप्रविभागपुरःसरं परिव्याप्ता सकलप्रमातॄन् आबध्नाति अथ तानमृतार्थं प्रपन्नानां सुविद्याप्रदायिनी भूत्वा सुभुक्तिदानपुरःसरं मुक्तिं लम्भयति। सेयं चिन्मयी ईशानमनोरमा सप्तप्रमातृतामयीमीशक्रीडालीलां सम्पादयन्ती श्रीमाता सुधीभिर्भक्ति-मद्भिराचार्यवद्भिर्नूनमुपास्येति सुविमृश्य पं0श्रीकमलेशझाशर्मविदुषा '**श्रीमातृप्रत्यभिज्ञा**'-भिधं ग्रन्थरत्नं निरमायीति तदेतद् मुहुर्मुहुरवलोकयन्नहमेनं शैवदर्शनसर्वस्व-प्रतिपादक-कारिकामय-दर्शनग्रन्थरचयितारं शुभाशीर्भिर्योजयन् अन्नपूर्णाजानिं श्रीकाशीविश्वेश्वरं प्रार्थये ग्रन्थग्रन्थकृतोः कल्याणशतमिति शम्।

**शिवाद्यादिसमुत्पन्न - शान्त्यतीतपरोत्तराम्।**
**मातरं तां समस्तानां वन्दे शिवकरीं शिवाम्॥**

इत्याशिषः।

चन्द्रशेखरशिवाचार्य

(डॉ0 स्वामी चन्द्रशेखरशिवाचार्यः)
श्रीमत्काशीज्ञानसिंहासनाधीशः
जङ्गमबाडीमठः, वाराणसी-221001

## ॥ श्रीमातृप्रत्यभिज्ञा ॥

**जयाक्रमसमाक्रान्त - समस्तभुवनत्रय।**
**जयाविगीतमाबाल - गीयमानेश्वरध्वने॥**

स्वच्छस्वच्छन्दसंविदो माहात्म्यं सर्वात्मना आगमदर्शनेषु जेगीयते। एनां मातरमाधारीकृत्य साधनाव्यक्तीः सिद्धान्तांश्च दार्शनिकान् भक्तिप्रवणान् चायं चायं संविदद्वैतवादः वेदश्रुत्यविरोधेन सुप्रतिष्ठा-पितस्तैस्तैराचार्यैः श्रीसोमानन्द-श्रीमदुत्पल - श्रीमदभिनवगुप्तपाद श्रीरामेश्वरझाप्रभृतिभिः महामाहेश्वरैः शिवयोगिभिः। संविदोऽन्नपूर्णादिव्या मातुः श्रियः कथंचिद् दास्यमुपगतस्य तस्या एव शिवैश्वर्य - महिम्नः संकीर्तयतः प्रभवद्-ग्रन्थरत्नं **श्रीमातृप्रत्यभिज्ञेति** संज्ञां लभते। श्रीगुरुशक्त्या अनुगृहीतस्य साधनासम्पदुल्लासमयी संवित्तिरुदेष्यतीति कारिकामयस्य श्रीमातृप्रत्यभिज्ञाग्रन्थस्यास्य वादसंवादसौक्ष्म्याधिगमपुरःसरं संविदैश्वर्यसमवाप्तिर्महत्फलरसः श्रोत्रमनोऽभिराम आपीयतां भक्तिप्रवणैः सुधीरसिकैः सुनिभृतम्।।

**यत्र सोऽस्तमयमेति विवस्वांश्चन्द्रमःप्रभृतिभिः सह सर्वैः।**
**काऽपि सा विजयते शिवरात्रिः स्वप्रभाप्रसरभास्वररूपा॥**
**यः प्रसादलव ईश्वरस्थितो या च भक्तिरिव मामुपेयुषी।**
**तौ परस्परसमन्वितौ कदा तादृशे वपुषि रूढिमेष्यतः॥**

॥ श्रीगणेशाय नमः ॥

# प्रस्तावना

**ताश्च ताश्च ननु चित्तवृत्तयः संस्फुरन्तु सततं समन्ततः।
शश्वदासु सकलासु देवि! मे त्वं विभासि शिवसामरस्यभूः॥**

पारमेश्वरः परामर्शो नाम आगमपदवेदनीयः। चिद्रूपस्य परमेश्वरस्य यस्तावदन्तरङ्गः शब्दनात्मा व्यापारः स विमर्शइत्युच्यते। यतश्चासौ द्रढीयस्तमस्ततोऽस्य प्रत्यक्षादिकम्प्राति जीवितत्वमभिप्रेयते। शब्दनेन यद् यथा आमृश्यते तत् तथैव न त्वन्यथा। प्रत्यक्षादिभिः प्रमाणैः अवेद्यमपि अर्थम् आसमन्ताद् गमयतीति आगमः। सोऽयमागमः परमं प्रमाणम्। अपरिच्छिन्नप्रकाशात्मा माहेश्वरविमर्श-परमार्थः किल आगमः परिच्छिन्नमेव परिच्छिन्दता प्रत्यक्षेण अनुमानादिना वा अपरिच्छेद्यमप्यर्थं सर्वमविकलं सर्वात्मना पश्यति। तदेवम् प्रतिभेति प्रातिभं ज्ञानमिति वा मुख्यतया आगम इत्युच्यते। अपरोक्षः स्वात्मसाक्षात्कारः प्रत्यभिज्ञात्मा अत्रैवान्तर्भवति। तस्मादवर आगमो वेदादि - ग्रन्थेषु निबद्धा प्रसिद्धिरुच्यते। परम्परया श्रूयमाणा मौखिकी अलिखिता प्रसिद्धिस्ततोऽपि अवर आगमः तृतीयः परिगण्यते। आप्तवाक्यात्मा साधारण आगमश्चतुर्थः संकीर्त्यते। चतुर्विधानामेषामागमानां प्रामाण्यं स्वीक्रियते। तत्र पूर्वेषां त्रयाणाम् आगमानां प्रतिभा-लिखितप्रसिद्धि-मौखिक-प्रसिद्धिरूपाणां निरपेक्षं प्रामाण्यं भवति साधारणस्य आप्तवाक्यस्य तु तत्सापेक्षं प्रामाण्यं भवति। अखण्डितं परमं प्रामाण्यन्तु पारमेश्वरस्य आगमस्य स्वीक्रियते। आगमस्य तावद् उपदेष्टारः बहुविधाः श्रूयन्ते-नरः, ऋषिः, देवः, ब्रह्मा, विष्णुः, रुद्रः, ईश्वरः सदाशिवः, शक्तिः शिवो वा। लकुलीशः श्रीकण्ठश्च यतः ईश्वरभट्टारकस्य अवतारभूतौ स्तः अतः तदीयआगमः ईश्वरतुल्यप्रामाण्यमश्नुते। सर्वज्ञानोत्तरवचनप्रामाण्यात् परं परम् पूर्वपूर्वापेक्षया प्रमाणम् भवति। यदुक्तम्—

**नरर्षि – देवद्रुहिणविष्णुरुद्राद्युदीरितम्।**
**उत्तरोत्तर-वैशिष्ट्यात् पूर्वपूर्व-प्रबाधकम्।।** इति।[1]

पूर्वपूर्वप्रसिद्धिमूलत्वेन पर्यन्ततः सर्वज्ञस्य परमेश्वरस्य मूल प्रसिद्धिप्रवर्तकतया सिद्धिरिष्यते। यदुक्तम्—

**पूर्वपूर्वोपजीवित्वमार्गणे सा क्वचित् स्वयम्।**
**सर्वज्ञरूपे ह्येकस्मिन् निःशङ्कं भासते पुरा।।** इति[2]
**आगमो ज्ञानमित्युक्तमनन्ताः शास्त्रकोटयः।**
**शास्त्रं शब्दात्मकं सर्वं शब्दो हंसः प्रकीर्तितः।।** इतिच[3]

या परा वाक् तत्र शास्त्रतत्त्वम् अन्तरहंविमर्शे अविभागेन स्पन्दमानं स्फुरति। या पश्यन्ती वाक् तत्र अवतीर्णं तद् वर्णपदवाक्यतया प्रविविभाजयिषया परामृष्टं भवति। अथ या मध्यमा वाक् तत्र सम्प्रविष्टं शास्त्रतत्त्वं वर्णादि-तदर्थ-प्रविभागाभाससम्भिन्नतया भेदेन शब्दार्थ-द्विरूप तया भासते। या तु वैखरी वाक् तत्र सम्प्रविष्टं सत् किल तत् शास्त्रतत्त्वं बहिरपि प्रस्फुट-प्रविभक्ततया प्रकाशितं वाचः पृथक्तया प्रकाशितं भवति। यदुक्तम्— यदेवाविभागेन अन्तर्वस्तु स्फुरति, तदेव पश्यन्तीभुवि वर्णपद-वाक्यप्रविविभाजयिषया परामृष्टम्, मध्यमापदे च भेदेन स्थितं वस्तुपूर्वकं सम्पन्नं, यावद् वैखर्यन्तम्। इति[4]

प्रभोः स्वच्छन्दनाथस्य ऊर्ध्वोर्ध्वतया स्थिताद् अदृश्याद् वक्त्रविशेषात् षड् आगमाः समुद्गताः। तत्र सिद्धातन्त्रम्, वामकतन्त्रं मालिनी तन्त्रमिति तन्त्रत्रयं त्रिकागमशब्देनाभिधीयते। सौरभर्गशिखाद्या अन्ये त्रय आगमा ये सन्ति योजनया तेषां षडागमानां पराद्वैतदृष्टिप्रधानानाम् ऊर्ध्वोर्ध्वागमा इत्याख्या प्रथते। यदुक्तमभिनवगुरुणा—

**प्रकृतं ब्रूमहे देवी विसृष्टाश्चित्रसंविदः।**
**यावत्तावत्तदूर्ध्वोर्ध्वं स्त्रोतो यद्भेदवर्जितम्।।**
**सौरभर्ग-शिखादीनि ततः शास्त्राणि तेनिरे।**
**उक्तं भर्गशिखायाञ्च देवेन परमेष्ठिना।।**
**ऊर्ध्वस्त्रोतोद्भवं ज्ञानमिदं तत् परमं प्रिये।**
**परमध्वनिनोर्ध्वोर्ध्वं संविद्रूपाभिधायिना।।**

**ईशानवक्त्रान्निर्यातात् सिद्धान्ताद्भेदमादिशत्।**
**इह यावत्तु मुख्येयं षडात्मा शास्त्रसन्ततिः॥**
**एतत्पूर्वार्द्धभागीनि त्रिकशास्त्राणि यानि तु।**
**षडर्धसंज्ञया तानि गुरुभिर्भाषितान्यलम्॥** इति[5]

सन्ति तावत् स्वच्छन्दनाथस्य पञ्चमुखानि - ईशानः, तत्पुरुषः, सद्योजातः, वामदेवः अथच अघोरः। एतेभ्यो मुखेभ्यः दश शिवागमाः, अष्टादश रुद्रागमाः अथ चतुष्षष्टिः भैरवागमाः समुद्गताः। अतः पञ्चस्त्रोतोमयाः इत्याख्यया प्रथन्ते इमे आगमाः। इमानि मुखानि चिदानन्दैषणाज्ञानक्रिया-वक्त्रशब्देनापि अभिहितानि भवन्ति।

आगमाः अधिकारिभेदेन सम्प्रवृत्ताः अवराः, उत्तरोत्तराः, ऊर्ध्वाः, ऊर्ध्वोर्ध्वाश्चेति विभिन्न-संज्ञाभिरभिधीयन्ते। तत्र ये साधनामार्गाः समुपदिष्टास्ते भवन्ति— 1. वेदाचारः 2. शैवाचारः 3. वामाचारः 4. दक्षिणाचारः 5. कुलाचारः 6. मताचारः 7. कौलाचारः अथ च 8. त्रिकाचारः इति अष्टौ। क्रमाचारः त्रिकाचारस्यैव अङ्गं भवतीति श्रीतन्त्रालोकादिषु विविच्यते। उत्तरोत्तरमेषाम् अष्टानाम् आचाराणां माहात्म्यं विशिष्यते। यदुक्तम्—

**वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम्।**
**ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्॥** इति।[6]
**वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित्।**
**संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः॥** इतिच[7]

वस्तुतत्त्वज्ञानवान् अवाप्तस्वात्मप्रत्यभिज्ञः शास्त्रतत्त्ववित्, भुक्ति-मुक्तिदानसमर्थः, साधनारहस्यवेत्ता य आचार्यः स एव योगसाधनायाः दीक्षादाने समधिक्रियते। यदुक्तम्—

**अधिष्ठितं शिवेनैव तमाचार्यं विनिर्दिशेत्।** इति[8]
**तस्मात् तत्त्वविदाचार्यः श्रीमान् सर्वप्रदो भवेत्।**
**यावन्न तत्त्वविच्छैवे कथं कर्माणि कारयेत्॥** इति च[9]

आगमेषु परा संविदेव परमः शिवः, शिवः, शक्तिश्चेति तत्त्वत्रयरूपेण भासमाना अकुलमित्युच्यते। एतद् अकुलं सदाशिवतत्त्वं

द्वारीकृत्य अकुलस्य कुलरूपतया प्रथनं भवति। स्वातन्त्र्यशक्तिः अकुलस्य कुलरूपतया प्रथने हेतुर्भवति। यदुक्तम्—

**यतोऽयं कौलिकी विधिः प्रभवति, यत्र च प्रतिष्ठापदवीं भजते यन्मयं चेदं कौलिकम्, तदेवानुत्तरमित्युक्तम्।** इति[10]

अनुत्तरतत्त्वं किल विप्रतिपत्तिचतुष्टयातीतं भवति। यदुक्तमभिनवगुरुणा–

**नसन्न चासत् सदसन्न च तन्नोभयोज्झितम्।**
**दुर्विज्ञेया हि सावस्था किमप्येतदनुत्तरम्॥** इति[11]

अनुत्तरशिवात्मिकायाः शक्तेः पातः अनुग्राह्ये विधीयते। शक्तिपातवशात् किल शिवता प्रकाश्यते। शैवदर्शने स्वीकृतः शक्तिपातः वैष्णवदर्शने भक्तिशब्देन प्रोच्यते।

शक्तिपातवशाद् सद्गुरुम्प्रति नीयमाने अनुग्राह्ये दीक्षाबलाद् ज्ञानोदये पशुवासनाक्षये च योगसाधनाद्वारा अनुपायः सोपायो वा समावेशः समुदेति। तारतम्यं समपेक्ष्य सकलप्रमातृपदादुत्तरतः साधकस्य क्रमेण अक्रमेण वा सप्तविधप्रमातृता यदुल्लसति तत्र भुक्तिः मुक्तिर्वा यल्लभ्यते तत्सर्वं यथाशास्त्रमस्मिन् ग्रन्थे विशिष्टदार्शनिक-संवादमाश्रित्य विवेचितं विद्यते। श्रीमातुः कृपया प्रत्यभिज्ञास्वरूपं तत्फलं चात्र कारिकामये **श्रीमातृप्रत्यभिज्ञाग्रन्थे** तथा विवेचितं यथा सर्वत्र जगदम्बा अन्नपूर्णा भगवती विशालाक्षी श्रीविश्वेश्वरस्य प्रभोः हृदयमेव पदे पदे निभृतं स्तूयते। एनामेव मातरं शरण्यां शरणीकरवाणि—

**विश्वात्मिकां तदुत्तीर्णां हृदयं परमेशितुः।**
**परादिशक्तिरूपेण स्फुरन्तीं संविदं नुमः॥**

× × ×

**उच्छलन्त्यपि संवित्तिः कालक्रमविवर्जनात्।**
**उदितैव सती पूर्णा मातृमेयादिरूपिणी॥**

× × ×

**अत एषा स्थिता संविदन्तर्बाह्योभयात्मना।**
**स्वयं निर्भास्य तत्रान्यद् भासयन्तीव भासते॥**

## सन्दर्भ :


1. उद्धृतम् - श्रीतन्त्रालोकः 4/248
2. श्रीतन्त्रालोकः 35/11
3. स्वच्छन्दतन्त्रम् 4/340
4. परात्रीशिकाविवरणम् - पृ0 15
5. मालिनीविजयवार्तिकम् 1/160-165
6. उद्धृतं श्रीतन्त्रालोकः, विवेकः 190-3, पृ0 56
7. परात्रीशिकाविवृतिः, पृ0-92
8. स्वच्छन्दतन्त्रम् - 3/34
9. नेत्रतन्त्रम् - 16/43
10. परात्रीशिकाविवरणम् पृ0 31
11. श्रीतन्त्रालोकः 2/28

॥ श्रीः ॥

# विषयानुक्रमणिका

## ।। श्रीमातृप्रत्यभिज्ञा ।।

आनन्दं सन्निराशंसं परं देवमनुत्तरम्।
स्वतन्त्रं चिन्मयं दिव्यं श्रये स्वात्ममहेश्वरम्।।1।।

चिद्रूपोऽहं सदा स्वच्छः स्वच्छन्दः स्पन्दशक्तिदृक्।
उपायोपेयतां बिभ्रद् भामि लोकमहेश्वरः।।2।।

ययाऽऽद्यया महाशक्त्या शिवताऽऽधीयते सति।
इवर्णां तां शिवां नौमि मातृशक्तिं महेश्वरीम्।।3।।

यया भाति शिवे स्वच्छे शिवता विश्वताऽपि वा।
त्रिपुरामन्नपूर्णाम्बां श्रये तां भुवनेश्वरीम्।।4।।

विश्वेशसुन्दरीमिच्छां काशीं माधवमेव च।
श्रीगणेशं नमस्कृत्य कार्तिकेयं विभुं भजे।।5।।

पटसानामको ग्रामो जन्मभूमिर्बुधैर्युता।
जानकीदेव्यधिष्ठात्री जयताद् भक्तिसंकुला।।6।।

पूर्वस्यामम्बिकां तस्मिन् प्रतीच्यामर्च्यकालिकाम्।
श्रीशिवं श्रीहनूमन्तमुदीच्यां ठाकुरद्वयम्।।7।।

मातुर्मे निबिडाराध्यां श्रीकालीं कुलदेवताम्।
वन्दे सनातनीं दिव्यां सर्वाभीष्टप्रदायिनीम्।।8।।

शिवयोः काश्यधिष्ठातृपित्रोः सत्कृपया सतोः।
श्रीभैरवदृशा प्राप्तगृहस्वाम्यो नमामि तान्।।9।।

सर्वशास्त्रसुनिष्णातं शास्त्रज्ञानां प्रपाठकम्।
महामाहेश्वरं वन्दे श्रीरामेश्वरसद्गुरुम्।।10।।

गुरुं रामप्रसादं च रामसेवकझागुरुम्।
देवस्वरूपमिश्राख्यं कीर्त्यानन्दाभिधं तथा॥11॥

दातारशास्त्रिणं वन्दे श्रीसुब्रह्मण्यशास्त्रिणम्।
तत्तच्छात्रेषु निष्णातान् अन्यांश्च सुबहून् गुरून्॥12॥

जननीजनकौ वन्दे नित्यं पार्थिवपूजकौ।
भारतीं श्रद्दधानौ हि सद्‌गुरोः समुपासकौ॥13॥

गायत्रीमन्त्रदं वन्दे रामकान्तं मनीषिणम्।
श्रीकान्तं देवकान्तं श्रीगुरुं जयप्रकाशझाम्॥14॥

पुत्रीणामथ पुत्रस्य सौविध्येन प्रसादितः।
श्रीमातृप्रत्यभिज्ञायाः सम्पूर्त्यै मातरं श्रये॥15॥

जननी सदपत्यानां चतुर्णां विदुषी मृदुः।
गृहकर्मणि दक्षा च भार्या मेऽत्र प्रणोदिनी॥16॥

निगमानागमान् वन्देऽनादिवाचो महेश्वरीः।
शाश्वतीर्महतीः सत्याः शास्त्राणां प्राणदायिनीः॥17॥

ऋग्वेदोऽथ यजुर्वेदः सामवेदस्तथैव च।
वेदत्रयी समाख्याताऽथर्ववेदश्चतुर्थकः॥18॥

वैष्णवाः शैवशाक्ताश्च सौरा गाणपतास्तथा।
स्कान्दाः सन्त्यागमा मुख्यास्तन्त्रनाम्ना सुविश्रुताः॥19॥

श्रुतिद्वैविध्यमाख्यातं वेदतन्त्रविभेदतः।
सर्वशास्त्रसमाराध्यं पूजितं सद्भिरादरात्॥20॥

अधिकारिविभेदेन श्रुत्युपजीविदर्शनम्।
वैदिकं तान्त्रिकं चेति तद्भिन्नं तार्किकं मतम्॥21॥

एतानि भारतीयानि दर्शनानि विदुर्बुधाः।
वाङ्मयं दर्शनानान्तु सूत्रं वृत्तिश्च वार्तिकम्॥22॥

भाष्यं प्रकरणं चापि बहुधा प्रविभज्यते।
टीकाश्चैवोपटीकाश्च शास्त्रार्थानां प्रकाशिकाः॥23॥

प्रस्थानं भिन्नभिन्नं च सर्वत्रैव समादृतम्।
सिद्धान्तभूषणं तद् यदपसिद्धान्तवारणम्॥24॥

खण्डनं मण्डनं वापि तत एव चिकीर्षितम्।
आचार्याणां समेषान्तु विद्वेषो नात्र कारणम्॥25॥

निगमागमयोर्वैरभावो यन्नास्ति कश्चन।
आदरं सम्प्रकुर्वन्ति दर्शनान्यनयोस्ततः॥26॥

विद्यानामात्मविद्यायाः प्रशंसा भगवत्कृता।
विद्वद्भिःसा ततः सर्वैर्विवृता बहुयुक्तिभिः॥27॥

आनन्दकाननं काशी त्रिकण्टकविराजिता।
ब्रह्मविद्याप्रकाशाय सर्वत्र जगति श्रुता॥28॥

काशीविश्वेश्वरः श्रीमानन्नपूर्णोपलालितः।
देवैः समैस्तथा वेदैस्तन्त्रैरागमशब्दितैः॥29॥

समीड्यते बुधैर्भावैर्नरनारीभिरन्वहम्।
अन्तर्यामितया ह्येष प्राणिनां हृदये स्थितः॥30॥

तटेष्वेव परिभ्रान्तैर्लभ्यन्ते बहुभूतयः।
यस्य श्रीमहसे तस्मै नमोऽस्तु हरसिन्धवे॥31॥

विश्वस्मिन् विदिता विश्वे श्रद्धया सद्भिरीडिता।
धर्माणामथ विद्यानां बोधिका काशिका जयेत्॥32॥

आस्थानकानन्दवने सत्पाण्डित्यपरम्परा।
अनादिकालतो नन्द्या वर्ध्यतेऽत्र समन्ततः॥33॥

देवागाराणि बहुशः शिवयोस्तु गृहे गृहे।
सत्तया सुमहद्-दीप्त्या पूर्णा वाराणसी पुरी॥34॥

मोक्षधाम समाख्यातं यत्र भोगः शिवात्मकः।
नगरीषु स्वतः श्रेष्ठा प्रेष्ठा श्रीरियमुत्तमा॥35॥

विभ्राजते प्रयच्छन्ती प्राणिभ्यो भोगमोक्षकौ।
नटराजत्रिशूलस्था शिवसान्निध्यमण्डिता।
शिव आनन्दितो यत्र विभुः श्रीनटराजराट्॥36॥

इयमेवाजनिष्ट श्रीतीर्थंकरमुपान्तिमम्।
धर्मप्रसारकं भूयो जैनं श्री-पार्श्वनाथकम्॥37॥

मार्गाष्टाङ्गिकसद्घोषं धर्मचक्रप्रवर्तनम्।
सुगतः कृतवानत्र तरुणां करुणां श्रितः॥38॥

अधिभारतवर्षं सद् यद् व्याप्नोति त्रिकोणकम्।
तान्त्रिकं कामरूपेऽथ काश्मीरे केरलेऽपि तत्॥39॥

तत्र केन्द्रे स्थिता काशी तनुते परमां मुदम्।
अनुत्तर-शिवाह्लादं जनयन्ती मुहुर्मुहुः॥40॥

शिवावताररूपश्रीभगवत्पादकर्मभूः।
श्रीभास्करस्य रायस्य श्रीकरपात्रसन्मुनेः॥41॥

श्रीगोपीनाथकस्याथो श्री-रामेश्वरसद्गुरोः।
कर्मभूमिस्तपोभूमिः सेव्या काशी निरन्तरम्॥42॥

चिदानन्दमयी भक्तिप्रवणा ज्ञानदायिनी।
श्लाघ्या सुकृतिभिः सेयं पञ्चगङ्गसुलालिता॥43॥

सर्वागमनदीनां या काम्यां सम्पूर्णतां वहेत्।
भुवं नाभिनिविश्येयं जयेत् काशी सुविश्रुता॥44॥

अथर्ववेदशाखासु पैप्पलादेति शाखिका।
श्रीकाशीवासिनं तत्र 'काशयः' श्रूयते पदम्॥45॥

सम्बोधनपदं प्राप्यं काश्यः शतपथे पुनः।
उत्तरस्यान्तु वरुणा दक्षिणस्यान्तु दिश्यसिः॥46॥

प्रवहद्भ्यां सदान्वर्था पुरी वाराणसी जयेत्।
रामायणमिमां गायेदादिकाव्यं सुनिर्मलाम्॥47॥

यशोगानं भवेदस्या महाभारतसंस्तुतम्।
नूनं विज्ञायते सूक्त्या 'काशिराजश्च वीर्यवान्'॥48॥

पुराणं वामनं लैङ्गं मात्स्यं तत् त्रिकमादरात्।
प्रासादान् हारिणः प्राहुरुद्यानानि तडागकान्॥49॥

देवैश्च स्पृहणीयानि कुसुमानि सुतीर्थकम्।
देवाधिदेव-सौख्यस्य वर्धकं सुमनोहरम्॥50॥

सर्वदेवमयं श्रीमन्माधवेनाभिनन्दितम्।
स्कान्दे विस्तरशः प्रोक्तं काशीखण्डे विशेषतः॥51॥

भिन्नभिन्नाभिधानानामभिन्न – शिवरूपिणाम्।
तपस्विभिः समीड्यानां महिमा विविधो विराट्॥52॥

भूरिभाग्याश्च भव्याश्च सुजना भुवि संस्थिताः।
धर्मस्य परतत्त्वस्य सृष्टेश्च स्वात्मनस्तथा॥53॥

अनुत्तरमहेशस्य विनिश्चित्यै मुहुर्मुहुः।
मानभूमिमिमां दिव्यां काशीमेव विचिन्वते॥54॥

आस्थानकानन्दवने सत्पाण्डित्यपरम्परा।
अनादिकालतो नन्द्या वर्ध्यतेऽत्र समन्ततः॥33॥

देवागाराणि बहुशः शिवयोस्तु गृहे गृहे।
सत्तया सुमहद्-दीप्त्या पूर्णा वाराणसी पुरी॥34॥

मोक्षधाम समाख्यातं यत्र भोगः शिवात्मकः।
नगरीषु स्वतः श्रेष्ठा प्रेष्ठा श्रीरियमुत्तमा॥35॥

विभ्राजते प्रयच्छन्ती प्राणिभ्यो भोगमोक्षकौ।
नटराजत्रिशूलस्था शिवसान्निध्यमण्डिता।
शिव आनन्दितो यत्र विभुः श्रीनटराजराट्॥36॥

इयमेवाजनिष्ट श्रीतीर्थंकरमुपान्तिमम्।
धर्मप्रसारकं भूयो जैनं श्री-पार्श्वनाथकम्॥37॥

मार्गाष्टाङ्गिकसद्घोषं धर्मचक्रप्रवर्तनम्।
सुगतः कृतवानत्र तरुणां करुणां श्रितः॥38॥

अधिभारतवर्षं सद् यद् व्याप्नोति त्रिकोणकम्।
तान्त्रिकं कामरूपेऽथ काश्मीरे केरलेऽपि तत्॥39॥

तत्र केन्द्रे स्थिता काशी तनुते परमां मुदम्।
अनुत्तर-शिवाह्लादं जनयन्ती मुहुर्मुहुः॥40॥

शिवावताररूपश्रीभगवत्पादकर्मभूः।
श्रीभास्करस्य रायस्य श्रीकरपात्रसन्मुनेः॥41॥

श्रीगोपीनाथकस्याथो श्री-रामेश्वरसद्गुरोः।
कर्मभूमिस्तपोभूमिः सेव्या काशी निरन्तरम्॥42॥

चिदानन्दमयी भक्तिप्रवणा ज्ञानदायिनी।
श्लाघ्या सुकृतिभिः सेयं पञ्चगङ्गसुलालिता॥43॥

सर्वागमनदीनां या काम्यां सम्पूर्णतां वहेत्।
भुवं नाभिनिविश्येयं जयेत् काशी सुविश्रुता॥44॥

अथर्ववेदशाखासु पैप्पलादेति शाखिका।
श्रीकाशीवासिनं तत्र 'काशयः' श्रूयते पदम्॥45॥

सम्बोधनपदं प्राप्यं काश्यः शतपथे पुनः।
उत्तरस्यान्तु वरुणा दक्षिणस्यान्तु दिश्यसिः॥46॥

प्रवहद्भ्यां सदान्वर्था पुरी वाराणसी जयेत्।
रामायणमिमां गायेदादिकाव्यं सुनिर्मलाम्॥47॥

यशोगानं भवेदस्या महाभारतसंस्तुतम्।
नूनं विज्ञायते सूक्त्या 'काशिराजश्च वीर्यवान्'॥48॥

पुराणं वामनं लैङ्गं मात्स्यं तत् त्रिकमादरात्।
प्रासादान् हारिणः प्राहुरुद्यानानि तडागकान्॥49॥

देवैश्च स्पृहणीयानि कुसुमानि सुतीर्थकम्।
देवाधिदेव-सौख्यस्य वर्धकं सुमनोहरम्॥50॥

सर्वदेवमयं श्रीमन्माधवेनाभिनन्दितम्।
स्कान्दे विस्तरशः प्रोक्तं काशीखण्डे विशेषतः॥51॥

भिन्नभिन्नाभिधानानामभिन्न - शिवरूपिणाम्।
तपस्विभिः समीड्यानां महिमा विविधो विराट्॥52॥

भूरिभाग्याश्च भव्याश्च सुजना भुवि संस्थिताः।
धर्मस्य परतत्त्वस्य सृष्टेश्च स्वात्मनस्तथा॥53॥

अनुत्तरमहेशस्य विनिश्चित्यै मुहुर्मुहुः।
मानभूमिमिमां दिव्यां काशीमेव विचिन्वते॥54॥

रामानुजमहाचार्यो रामानन्दश्च सद्गुरुः।
निम्बार्काचार्यवर्योऽथ मध्वाचार्योऽपि भेददृक्॥55॥

श्रीकृष्णभक्तिसंलग्नः श्री-चैतन्यमहाप्रभुः।
आचार्यवल्लभः काश्यां वसतिं स्वां प्रचक्रिरे॥56॥

बृहदारण्यके प्रोक्ताऽऽख्यायिका प्रथिता भुवि।
श्रीमानजातशत्रुर्यः काशिराजः पुराऽभवत्॥57॥

बालाकिगार्ग्यमुद्दिश्य रहस्यं ह्यात्मनोऽब्रवीत्।
काशिराजो दिवोदासश्चिकित्साशल्यविच्छ्रुतः॥58॥

काशीमेव समाश्रित्य स्वाध्यायः सार्वशाखिकः।
पठ्यते विविधं शास्त्रं वर्ध्यते रक्ष्यतेऽपि च॥59॥

रामानन्दगुरोः प्राप्तदीक्षो निर्गुण-भक्तिदृक्।
श्रीकबीरः शुभां वाचमादाय दर्शनं व्यधात्॥60॥

गोस्वामितुलसीदासः सगुणां भक्तिमादिशत्।
रचयित्वेह काव्यं श्रीरामचरितमानसम्॥61॥

काश्यां नानकदेवोऽभूद् गुरुवाणीप्रकाशकः।
काशीवासी गुरुः स्वस्थस्तस्य वाग् गुरुवाङ्मता॥62॥

वेदवादी दयानन्दः स्वाम्युद्धर्तुं जनान् बहून्।
येन सनातना अत्र शास्त्रार्थं भृशमुज्जगुः॥63॥

मध्ये विश्वेश्वरः काश्यां केदारेश्वर - सद्गुरुः।
ओंकारेश्वर ईड्यन्ते दक्षिणोत्तरयोः सदा॥64॥

भूतानां भाविनी भव्या भावनीयाऽपि दैवतैः।
श्रीकाशिका त्रयी विद्या नित्याऽभेद्या त्रिकार्चिता॥65॥

का न सम्पन्न का सूक्तिः का न भुक्तिः स्तुतिर्न का।
न का मुक्तिरहो देवो विश्वनाथो यदर्च्यते॥66॥

मदनो मोहनो मालवीयो भागवतो महान्।
विश्वनाथेष्टदेवोऽसौ काश्यां स्थापितवान् मुदा॥67॥

धन्यं यशस्विनं हिन्दूविश्वविद्यालयं शुभम्।
प्रतीचीमथ च प्राचीमन्वितां सम्प्रचारितुम्॥68॥

विश्वस्मिन् प्रथते सोऽद्य विश्वविद्यालयो महान्।
संकाये संस्कृते तत्र भाति धर्मागमो विभुः॥69॥

तत्र सम्पाठ्यते शास्त्रं निगमागमदर्शनम्।
स्मृतिर्बहुविद्या धर्मप्रभेदो विश्व एव हि॥70॥

श्रीकमलेशदत्तस्तु त्रिपाठी सद्बुधः श्रुतः।
धर्मागमविभागे स्वे मां नियोज्याप सन्मुदम्॥71॥

ममावेदनतः सोऽयं जगतीह सुविश्रुतः।
इमेरिटस् पदे न्यस्तो वाग्ग्मी सर्वत्र नन्द्यते॥72॥

वाक्यपदीयसद्ग्रन्थं श्रीरामेश्वरझागुरोः।
सोऽधीत्य शैव–काश्मीरं चष्टे गोष्ठ्यां महाबुधः॥73॥

सस्नेह एष मां प्राह स्मारयन् श्रीगुरोर्वचः।
सद्ग्रन्थो रच्यतां पद्यमयं मातृप्रबोधकम्॥74॥

सोऽहमीश्वर – संबोध – प्रत्यभिज्ञानहेतवे।
प्रणिपत्याम्बिकां मातृप्रत्यभिज्ञां समारभे॥75॥

सर्वार्थविधिसम्पत्त्यै शर्वो यां वनुते सदा।
श्रीविश्वेशयशो गातुं तामीशवनितां श्रये॥76॥

यन्मूर्ध्नि विश्वेशकरः सदास्ते
यस्मिन् विदां प्राज्ञसतां प्रसादः।
शास्त्रप्रसादो गुरुसम्प्रसादः
सोऽहं सुधीस्त्वां जननीं प्रपद्ये॥77॥

विश्वेश्वरं प्रणम्याहं बिन्दुमाधवमेव च।
ढुण्ढिराजं गणेशं च दण्डपाणिं सुभैरवम्॥78॥

काशीं गुहां च गङ्गां च भवानीं मणिकर्णिकाम्।
दुर्गाम्बां हनूमन्तं रामं कृष्णं गुरुं शिवम्॥79॥

नत्वा नारायणं देवं मातुर्बोधोपपत्तये।
प्राप्तदास्योऽन्नपूर्णायाः प्रत्यभिज्ञां समारभे॥80॥

यदत्र वर्ण्यते सम्यक् सिद्धान्तस्य स्वरूपकम्।
गुरूणामेव तज्ज्ञेयं मद्बुद्धौ स्थापितं हि तैः॥81॥

यदत्र नानवद्यं तन्मामकीनं हि शोध्यताम्।
परिष्काराय शोधाय परामर्शो विधीयताम्॥82॥

सर्वशास्त्रनदीसंघो यं प्राप्याप्नोति पूर्णताम्।
शैवागमाब्धिं तं वन्दे संविद्बोधसमुज्ज्वलम्॥83॥

संविद्-देवी पराशक्तिः संवित्तिः पूर्णता चितिः।
प्रत्यभिज्ञाऽन्नपूर्णा चिद् महाव्याप्तिः स्वतन्त्रता॥84॥

वाणी वाग् दृक् परामर्शो भोगो धाम परं महः।
विमर्शः परमा शक्तिराद्या ह्येते समार्थकाः॥85॥

स्वभाविनः शिवस्यास्ति स्वभावः शक्तिरुत्तमा।
न मनागपि भेदोऽस्ति वह्नि-दाहिकयोरिव॥86॥

शिवो वा कथ्यतां शक्तिर्भेदो नास्त्येव वस्तुतः।
अद्वैतं शिवयोर्वन्दे ह्यर्धनारीश्वरं वपुः॥87॥

शिवः प्रकाश इत्युक्तो विमर्शः शक्तिरेव हि।
शिवः स्वभावी यस्मात्ततः शक्तिं जहाति नो॥88॥

सामरस्यं द्वयोरास्ते ह्यन्योन्यात्मतया सतोः।
यदेव सामरस्यं सत् तत्संविदभिधीयते॥89॥

लोके शास्त्रे सम्प्रवृत्तो व्यवहारस्तु कश्चन।
प्रचलेदनुरोधेन यतोऽस्या एव संविदः॥90॥

परमोपास्यता चास्याः प्रवदन्ति बुधास्ततः।
शास्त्रकृद्भिः समं चास्या माहात्म्यं गीयते भृशम्।91॥

स्वस्वरूपं शिवं देवं शक्तिश्चेदनुगच्छति।
विश्वोत्तीर्णं भवेद्रूपं शिवस्यैतद्विदुर्बुधाः॥92॥

सा चेद् विश्वतया भाति रूपं विश्वमयं भवेत्।
अवभासे द्वये तस्माच्छक्तेरेव विचित्रता॥93॥

या विश्वोत्तीर्णता प्रोक्ता या विश्वमयताऽथवा।
साऽनारतं सम्प्रवृत्ता लीलाक्रीडा महेशितुः॥94॥

सर्वप्रकाशिका संवित् स्वयमेव प्रकाशते।
प्रकाशने परापेक्षा यतस्तस्या न विद्यते॥95॥

संविदो वैभवं विश्वं यतः संविदि वर्तते।
तद् विश्वमयता तस्यां विश्वोत्तीर्णतया सह॥96॥

वैभवं विश्वमेतस्यां विक्रियां जनयेन्नहि।
भातत्वाद् गतिशीलत्वाद् ऐश्वर्यमवबोधयेत्॥97॥

अधिकारिविभेदेन शास्त्रविद्भिः प्रकल्पिताः।
द्वैताद्वैतशिवाद्वैतवादप्रभृतयः शुभाः॥98॥

ते सर्वे सार्थकाः सन्तः संवित्तौ सम्प्रतिष्ठिताः।
संवित्तौ भासमानत्वात् संविद्रूपा विभान्ति नः॥99॥

ततो नैवातिरिच्यन्ते ते तद्भाता घटादिवत्।
महिमा संविदः सर्व आगमेषु निगद्यते॥100॥

सांख्ययोगौ तथा न्यायवैशेषिकौ द्वयी च या।
मीमांसा चेति षट्प्राहुः श्रौतानि दर्शनानि हि॥101॥

शैवं शाक्तं वैष्णवञ्च स्कान्दं गाणपतन्तथा।
सौरं षडेव तन्त्रात्मदर्शनानि मनीषिणाम्॥102॥

काश्मीरशैव-सिद्धान्तशैवौ वीरस्तथैव च।
त्रिप्रभेदं भवेच्छैवं वैष्णवं द्विविधं स्मृतम्॥103॥

वैखानसं तथा पाञ्चरात्रं प्रस्थानकद्वयम्।
तार्किकाणि दर्शनानि चार्वाकजैनबौद्धकम्।104॥

विभाषदृक् च सूत्रात्मा योगाचारः सुमध्यमः।
बौद्धप्रस्थानभेदास्तु चत्वारः कीर्तिता इमे॥105॥

तदेवं भारतीयानि दर्शनानि विभान्ति हि।
स्कन्धत्रितयभक्तानि संवादीनि परस्परम्॥106॥

विचारे भाति सुस्पष्टं समन्वयधिया कृते।
नैगमे दर्शने वादा भिन्नाभिन्नास्तु ये स्थिताः॥107॥

अद्वैते शाङ्करे तेषां तात्पर्यं परमन्ननु।
आगमदर्शने वादा भिन्नाभिन्नात्मकास्तु ये॥108॥

तेषां काश्मीरकाद्वैते तात्पर्यं परमिष्यते।
तार्किके दर्शने वादा भिन्नभिन्नास्तु ये स्थिताः॥109॥

तेषां शून्येऽथवा ज्ञप्तौ तात्पर्यं परमं मतम्।
अद्वैतं तावता भाति चतुर्धा संविभाजितम्॥110॥

ब्रह्माद्वैतं तु नैर्गुण्यं शून्यं विज्ञप्तिरेव च।
ईश्वराद्वैतमित्याहुर्विद्वांसः सुविचक्षणाः॥111॥

शून्यं विज्ञप्तिरित्येषा द्वयी या भाति बौद्धके।
निर्गुणाद्वैतकं तावच्छाङ्करे सम्प्रसिध्यति॥112॥

ईश्वराद्वयवादे हि तात्पर्यं परमं किल।
शून्यविज्ञप्तिमायाख्यवादानां सुस्थितं ननु॥113॥

काश्मीरसंमतेऽद्वैते त्वीश्वराद्वैतसंज्ञके।
त्रयाणां स्थितिराख्याता साहमहमिका मता॥114॥

श्रीमातृप्रत्यभिज्ञायां ग्रन्थे वादोऽयमादृतः।
यत्र सम्मिल्य गच्छन्ति दर्शनानि कृतार्थताम्॥115॥

अप्रतिघातिनी स्वच्छा स्वेच्छा भाति महेशितुः।
तया श्रीकण्ठनाथेन श्रीमत्कैलासवासिना॥116॥

ईशेन शैवसिद्धानां दर्शनस्य परम्पराम्।
प्रवर्तयितुमादिष्टः श्रीदुर्वासाः कलौ मुनिः॥117॥

त्र्यम्बकादित्यनामानं ससर्ज मानसं सुतम्।
शक्तिपातेन विधिना तीव्रतीव्रतरं मुनिः॥118॥

साधनानां सुविज्ञानं शास्त्रज्ञानं सुते दधौ।
शैवदर्शनसिद्धान्तं प्रावोचदथ तं सुतम्॥119॥

सर्वशास्त्रसुनिष्कर्षं सर्वत्रैनं प्रचारयेः।
मुनेराज्ञामवाप्यासौ सिद्धान्तं भुवि चारयन्॥120॥

मानसं सुतमुत्पाद्य स्वं नामास्मै समादिशत्।
स्वपितुः प्राप्तसंस्कारस्तन्नामा तस्य कर्मकृत्॥121॥

शैवदर्शन–सिद्धान्तान् भुवि भूयोऽतनोदयम्।
सर्वदर्शनसिद्धान्तानङ्गत्वेन प्रकाशयन्॥122॥

नाम्नैकार्थितयैकदेशिकतया जात्या स्वभावेन वा
ह्याचार्तुदशतीर्थवंशिकततिर्दुर्वासस: सन्मुनेः।
श्रीत्रैयम्बकवीर्यशौर्यवसतिः स्वादित्यसन्नामकः।
शैवान् दार्शनिकान् पदार्थनिवहान् सर्वत्र सन्नीतवान्॥123॥

अथ पञ्चदशस्त्र्यम्बकादित्यो वंशजः सुतः।
विप्रकन्याविवाहेन यो जातः सद्गृही किल॥124॥

कालेन गच्छता गूढसंगमाद् वरकन्ययोः।
संगमादित्यनामाभूत् पुत्रः परमधार्मिकः॥125॥

सोऽयं पञ्चदशः पुत्रं गृहिणं स्वं समादिशत्।
प्रावर्तत तदारभ्य गृहिगुरुपरम्परा॥126॥

संगमादित्यनामासौ श्रीकैलासादवातरत्।
कृतलक्षणसद्धाम्नि शारदापीठनामनि॥127॥

मठिकामधिकाश्मीरं शोभनामसृजद् गुरुः।
परम्परा तदीया या तेरम्बाऽद्य निगद्यते॥128॥

काश्मीरे बहवोऽद्यापि त्र्यम्ब्युपनामका जनाः।
वसन्ति प्रतिभोद्दीप्तास्तदीया वंशजाः शुभाः॥129॥

संगमादित्यपुत्रोऽभूद् वर्षादित्योऽथ तत्सुतः।
अरुणादित्यनामाऽभूत् तस्मादानन्द-संज्ञकः॥130॥

आनन्दस्य सुतो जातः सोमानन्दो महागुरुः।
सद्ग्रन्थं शिवदृष्ट्याख्यं जग्रन्थाचार्यको महान्॥131॥

अद्यत्वे प्राप्यमाणानां ग्रन्थोऽयं प्रथमः स्मृतः।
सर्वदर्शनसम्मान्यो विशिष्टः शैवदर्शने॥132॥

त्र्यम्बकमठिकाधीश आरभतापि साधनाम्।
दर्शनेन समायुक्तां सोमानन्दस्ततः परम्॥133॥

श्रीमानुत्पलदेवोऽभूदधीशस्तदनन्तरम् ।
लक्ष्मणोऽभिनवो गुप्तपादोऽभूत् तदनन्तरम्॥134॥

मठिकाधिपतीनान्तु श्रीश्रीनगरवासिनाम्।
एषां सन्त्यधमर्णा वै समे दर्शनवेदिनः॥135॥

'श्रीबालबोधिनीन्यासे' शितिकण्ठः समब्रवीत्।
पाम्पोरवासिनं स्वन्तु सोमनाथस्य वंशजम्॥136॥

यो नवमे शताब्देऽभून्महात्मा साधको वरः।
सोमानन्दः सम्प्रपेदे रिक्थस्वरूपमागमम्॥137॥

शिवसूत्र-स्पन्दसूत्रे व्याख्याते तेन विस्तृते।
दर्शने प्रत्यभिज्ञायां नासीद् ग्रन्थस्तु कश्चन॥138॥

शिवेन स्वप्नदृष्टेन समाज्ञप्तो महानयम्।
शिवदृष्टिं चकारासावधीती सर्वदर्शने॥139॥

रहस्यसाधनाव्यक्तीः सिद्धान्तान् दर्शनस्य च।
शिवाद्वयसुतात्पर्ये विवृणोति स्म सुन्दरम्॥140॥

व्याकरणस्य शाक्तस्य तद्भिन्नदर्शनस्य च।
शिवदृष्टौ समीक्षाभूत् सत्तर्का बुधमानभाक्॥141॥

एकत्रिंशतिसंख्याकास् तर्का ये प्रबला इह।
पूर्वपक्षस्य ताः सर्वाः प्रविविच्य निराकृताः॥142॥

ईश्वराद्वयसिद्धान्तः स्थापितः सुमनोहरः।
षट्त्रिंशतत्त्वसद्रूपः सर्वतत्त्वात्मकः शिवः॥143॥

एकैकमपि तत् तत्त्वं शिवतां नैव मुञ्चति।
एकैकापि घटव्यक्तिः शैवीं दृष्टिं श्रिता जयेत्॥144॥

साधनाया रहस्यं सदुद्घाट्य सोम उक्तवान्।
घटो मदात्मना वेत्ति वेद्म्यहं च घटात्मना॥145॥

वृत्तिरुत्पलदेवेन शिवदृष्टेर्विनिर्मिता।
अवाप्यते न सा पूर्णा तस्याष्टीका तु या कृता॥146॥

श्रीमताभिनवेनापि गुरुणाऽऽलोचनं न सा।
प्राप्यतेऽतो निगूढस्य ग्रन्थस्यास्य दुरूहता॥147॥

सोमानन्द – गुरोः शिष्यः श्रीमानुत्पलसंज्ञकः।
ईश्वरप्रत्यभिज्ञाख्यं ग्रन्थं निर्मितवान् सुधीः॥148॥

सद्ग्रन्थेन किलैतेन जाता लोकमनोज्ञता।
प्रत्यभिज्ञाख्यसिद्धान्तसद्रत्नानां शुभावहा॥149॥

दास्यं माहेश्वरम्प्राप्य जनानामुपकारिकाम्।
प्रत्यभिज्ञां वितेने यो देवं तमुत्पलं श्रये॥150॥

निषेधायाथवा सिद्ध्या ईशस्य यतते कृती।
उपहास्यो भवेन्नूनमवाबोधयदुत्पलः॥151॥

कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः॥152॥

सम्पूर्णा ज्ञानशक्तिश्च क्रियाशक्तिश्च तादृशी।
राजते चेतने यत्र प्रोक्तः स ईश्वरः पुमान्॥153॥

जीवेऽपि ज्ञानशक्तिश्च क्रियाशक्तिश्च विद्यते।
पूर्णा, सा मायया किन्तु भासते नावृता यतः॥154॥

मातुस्तस्य स्वरूपं स्वं प्रत्यभिज्ञायते यदा।
आवरणात्यये जाते पूर्णा शक्तिः प्रकाशते॥155॥

तदेतदुच्यते शक्त्या पारमैश्वर्यमागतम्।
सम्पूज्यां प्रत्यभिज्ञां तां मातरं प्राहुरागमाः॥156॥

माहात्म्यं प्रत्यभिज्ञाया विदुरागमवेदिनः।
ईश्वरप्रत्यभिज्ञेति ग्रन्थनाम समादृतम्॥157॥

पूर्णताप्रत्यभिज्ञेति श्रीरामेश्वरसंस्तुतम्।
दर्शनं प्रत्यभिज्ञायाः सर्वदर्शनसंग्रहे॥158॥

आस्थितं माधवार्येण विद्वद्भिश्चाथ सत्कृतम्।
श्रीमातृप्रत्यभिज्ञेति मया नाम पुरस्कृतम्॥159॥

महिमा प्रत्यभिज्ञाया बहुभिर्गीयते मुदा।
श्लोकाः केचन गीयन्तामस्माभिश्चैव साम्प्रतम्॥160॥

प्राधीतास्ताश्च विद्या ऋषिमुनिगुरुभी रक्षिता याः प्रयत्नैः
प्राप्तं पीतञ्च पूर्णं गुरुमुखसुलभं ब्रह्म विद्यामृतं यत्।
किन्त्वेषा कापि रम्या समरसरसिका मोक्षयन्ती च भोगाञ्-
शक्तिः स्वीया स्वतन्त्रा विलसति हृदये श्रीमयी प्रत्यभिज्ञा॥161॥

कथंचिदासाद्य महेश्वरस्य
दास्यं जनस्याप्युपकारमिच्छन्।
समस्तसम्पत्-समवाप्तिहेतुं
तत्प्रत्यभिज्ञामुपपादयामि ॥162॥

पूर्णताप्रत्यभिज्ञेयं सर्वभावसुनिर्भरा।
मोक्षलक्ष्मी-महालक्ष्मीराजलक्ष्मीरिव प्रिया॥163॥

किन्तु मोहवशादस्मिन् दृष्टेऽप्यनुपलक्षिते।
शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते॥164॥

अकृत्रिमप्रमातुस्तु प्रत्यभिज्ञासमाख्यया।
प्रथनं तत्स्वरूपस्य शक्त्याविष्करणं ननु॥165॥

प्राधान्यात् प्रत्यभिज्ञाया उपायोपेयरूपणात्।
शक्तेः शक्तिमतश्चैक्यात् प्रत्यभिज्ञेति विश्रुतम्॥166॥

युक्तिभिः प्रबलाभिस्तु योगाचारेण साधितम्।
विज्ञप्त्यद्वैतमित्येतत् खण्डितं शतधा त्विह॥167॥

कार्यकारणताभावात् पूर्वोत्तरतया सतोः।
एकेनाकलनं यत् तत् स्थिर आत्मा महेश्वरः॥168॥

यत्तु नीलस्य विज्ञानं विज्ञानं यत्सुखस्य च।
यो वहेदुभयोः साक्ष्यं स्थिर आत्मा महेश्वरः॥169॥

येनानुभूयते तेन स्मर्यते नेतरेण यत्।
तयोराधारभूतो यः स्थिर आत्मा महेश्वरः॥170॥

ज्ञानं शक्तिः स्मृतिः शक्तिः शक्तिश्चापोहनं मतम्।
तासामाधारता यस्मिन् स्थिर आत्मा महेश्वरः॥171॥

श्रीकृष्ण आत्मवान् प्राह सुस्थिरेणात्मना विना।
उपपत्तिं कथं यायात् स्मृतिर्ज्ञानमपोहनम्॥172॥

ईश्वर - प्रत्यभिज्ञायामधिकारश्चतुर्विधः।
ज्ञानाख्यः प्रथमः प्रोक्तः क्रियाख्यस्तु द्वितीयकः॥173॥

आगमस्तु तृतीयः स्यात् तुर्यः स्यात् तत्त्वसंग्रहः।
शक्तित्रयमयो हीशः स शक्तिभ्यो न चेतरः॥174॥

परमेश्वरता सैषा परतत्त्वान्न भिद्यते।
दृढं ज्ञानाधिकारे तद् युक्तिभिः सुनिरूपितम्॥175॥

अधिकारे द्वितीयेऽथ क्रियाशक्तिर्निरूप्यते।
सम्बन्धोऽवयवी चेति दिक्कालादिस्ततः परम्॥176॥

कार्यकारणभावश्च सरहस्यमुदीरितः।
या तु निर्गुणपारम्यवादिनां सम्मता किल॥177॥

अविद्या तां निराकर्तुं समीक्षा विहिता दृढा।
अधिकारे तृतीये तु षट्त्रिंशत्–तत्त्वको गणः॥178॥

प्रविभज्य विवेकेन नितरां सुनिरूपितः।
स्वरूपं सप्तमातृणां प्रविविच्य निरूपितम्॥179॥

अधिकारे चतुर्थे तु सिंहावलोकनं कृतम्।
विवेचितपदार्थानां युक्त्या समनुशीलनम्॥180॥

जाग्रदादिप्रभेदेन यदवस्थाचतुष्टयम्।
बन्धमोक्षस्वरूपं च वैशद्येन निरूपितम्॥181॥

ईशवरप्रत्यभिज्ञायाः स्वरूपं सप्रयोजनम्।
ग्रन्थोऽयं पूर्णतां नीतः सर्वलक्षणलक्षितः॥182॥

श्रीमदुत्पलदेवस्य या तु सिद्धित्रयी श्रुता।
जडप्रमातुराद्या चेद् द्वितीया त्वीश्वरस्य सा।
तृतीया सिद्धिराख्याता सम्बन्धस्य शुभावहा॥183॥

निरस्ता प्रथमे ग्रन्थे जडविज्ञानमातृता।
चिदात्मा साधितःसाक्षी सर्वभावसमुज्ज्वलः॥184॥

विपरिणमते सांख्यसम्मता प्रकृतिः स्वयम्।
आलोचितं द्वितीये तत् प्रेरयितृप्रसाधनात्॥185॥

सम्बन्धस्य तृतीये त्वाविष्कृतं तत्त्वमादरात्।
यत् तत् प्रयोजनं सूक्तं सम्बन्धे सावधानता॥186॥

एतेषां प्रतिपाद्यानां सिद्धिग्रन्थेषु मुख्यता।
विलक्षणा सती युक्तिः सिद्धित्रयीं विशेषयेत्॥187॥

ईश्वरप्रत्यभिज्ञायाः सिद्धित्रय्याश्च या कृता।
शिवदृष्टेरौत्पली च वृत्तिर्नैवास्त्यखण्डिता॥188॥

विमर्शिनीं तदन्यां वा टीकामादाय बुध्यते।
ईश्वरप्रत्यभिज्ञैव न तु सिद्धित्रयी तथा॥189॥

सद्व्याख्यानमपेक्षन्ते शिवदृष्टेश्च कारिकाः।
सुकवेः शिवभक्तस्य तार्किकस्योत्पलस्य तु॥190॥

विश्वावर्तेन संगृह्य मुक्तकानि समन्ततः।
शिवस्तोत्रावली–ग्रन्थरूपताम् प्रापितानि हि॥191॥

अस्यास्तु क्षेमराजेन स्वामिना लक्ष्मणेन च।
संस्कृतेन कृता टीका हिन्द्या च क्रमशः शुभा॥192॥

यस्य लक्ष्मणगुप्तस्य शिष्योऽभिनवगुप्तकः।
उद्धृतं तद्वचो भूयस्तद्ग्रन्थस्तु न लभ्यते॥193॥

श्रीशास्त्रकृद्घटितलक्ष्मण-गुप्तपाद-
सत्योपदर्शित-शिवाद्वयवाद – दृप्तः।
एतद्वचो विवृतिमर्शन-सम्प्रयुक्तं
ब्रूते नु तस्य गुरुलक्ष्मणशिष्यतां च॥194॥

ग्रन्थस्याज्ञातनाम्नस्तु कर्तुर्लक्ष्मणसद्गुरोः।
सच्छिष्योऽभिनवो विप्रो वितेने विपुलं यशः॥195॥

प्राधीत्यनेकशास्त्रेषु गुरुभ्योऽभिनवो बुधः।
संस्तौति जगदुद्धृत्यै श्रीशम्भुनाथसद्गुरुम्॥196॥

महामाहेश्वरः सोऽयं प्रत्यभिज्ञाविमर्शिनीम्।
सुबोधामकरोद् विद्वान् विवृतेश्च विमर्शिनीम्॥197॥

सर्वदर्शनवेत्तायं श्रीतन्त्रालोकमाकरम्।
सद्ग्रन्थं निरमात्तस्माज्जातः श्लाघ्यतमो विदाम्॥198॥

पूर्वं भागन्तु मालिन्या आधृत्यानेन निर्मितम्।
मालिनीविजयं नाम वार्तिकं ग्रन्थमादरात्॥199॥

गोप्यं च गूढगहनं सुधियाधिगम्यं
भव्यं रहस्यमखिलं नवगुप्तपादः।
ज्ञानं प्रकाश्य विमलं सुकृतैकगम्यं
सद्वार्तिकं रचितवान् महतामुपास्यः॥200॥

श्रीपरात्रीशिकायास्तु विवरणं विधाय सः।
त्रिकसाधनसर्वस्वं मातृकाविधिना व्यधात्॥201॥

अनुत्तराष्टिकां बोधपञ्चदशिक – संज्ञिकाम्।
लघुग्रन्थान् पुनस्त्रींश्च रचयित्वा मनोहराम्॥202॥

भेदविदारणं पूर्वपञ्चिकाग्रन्थमेव च।
कृतवान् क्रमकेलिञ्च लघुग्रन्थानसौ कृती।
नावाप्यन्ते विशिष्टास्ते नामशेषतया स्थिताः॥203॥

रूपान्तरं सत्परमार्थसारं शैवं स्वरूपं शिवशासनस्य।
सद्दृष्टिमादाय बुधैकरम्यं योगोत्तमं स प्रकटीचकार॥204॥

क्षेमराजस्तथा योगराजो जयरथस्तथा।
उत्पलवैष्णवश्चाथो आनन्दस्त्रिकपूजकः॥205॥

अथ विंशे शताब्देऽभूद् महामाहेश्वरो गुरुः।
आत्मवान् स्थितधीर्वाग्ग्मी शिष्यैः सद्भिः सुसेवितः॥206॥

श्रीमान् रामेश्वराचार्यः सर्वशास्त्रविशारदः।
काशीस्थान् भिन्नशास्त्रीयान् प्रत्यभिज्ञापयन् बुधान्॥207॥

अरुणोदयवेलातोऽपराह्णं यावदेव तु।
शास्त्राध्यापनसंलग्नो गुरुफैक्ट्रीं प्रचालयन्॥208॥

गाङ्गे दशाश्वमेधीये सायं समाधिमान् सदा।
विश्वनाथसमः पूज्यः सिद्धेशः साधको महान्॥209॥

गोपीनाथः पदार्थात्मा योगीशो गुरुराह तम्।
शिवेच्छया बुधो योगी भवानत्र सुविश्रुतः॥210॥

श्रीरामेश्वर! सद्योगिन्! वीतराग! विदांप्रिय।
अवतीर्णो भवान्नूनं श्रीमानभिनवो महान्॥211॥

तद्वदागमशास्त्रस्य साधनायाश्च बोधनम्।
ऋजुग्रन्थविनिर्मित्याऽध्ययनं सम्प्रचारयेद्॥212॥

तदाज्ञां हृदि संधार्य ग्रन्थरत्नं विरच्य सः।
पूर्णताप्रत्यभिज्ञाख्यं गुरवेऽस्मै न्यवेदयत्॥213॥

तदभ्यस्य गुरुः सम्यक् प्रययौ परमां मुदम्।
तदीया श्रीक्रमाभिज्ञापनापि विद्धिरादृता॥214॥

श्रीस्वामिलक्ष्मणादीशात् सम्प्रदायमवाप यः।
बहुभ्यो गुरुतां यच्छन् गुरू रामेश्वरोऽवदत्॥215॥

न मया क्रियते शिष्यः कृतः शिष्यो न कश्चन।
शिष्यतामिच्छते सद्यो दीयते गुरुता मया॥216॥

गुरोर्दैनन्दिनीतो हि श्लोकानां शतपञ्चकम्।
सम्पादितं मयानूद्य संवित्स्वातन्त्र्य-संज्ञकम्॥217॥

स्तोत्रादिप्रविभागेन तच्छलोकाः कलिता मया।
प्रकाशनाय मत्पार्श्वे सज्जीकृत्य सुरक्षिताः॥218॥

दुर्वाससः कृपापात्रमाचार्योऽमृतवाग्भवः।
यच्छिष्यो बलजिन्नाथो ग्रन्थानरचयद्मुदा॥219॥

आद्यस्त्वात्मविलासाख्यः शास्त्रं विंशतिका ततः।
सिद्धमहारहस्यं च मन्दाक्रान्तामयी स्तुतिः॥220॥

शक्तेर्महानुभूतेस्तु परशोः स्तुतिरेव च।
श्रीपरमशिवस्तोत्रं संजीवन्याश्च दर्शनम्॥221॥

दुर्वाससो भगवतो वदनारविन्दात्
साक्षान्निधानमधिगम्य समाधियुक्तेः।
आलम्ब्य तच्छिवकरं जनतापहर्ता
ग्रन्थो व्यधायि विदुषाऽमृतवाग्भवेन॥222॥

निगमो नाम दिव्या वागैश्वरी त्वागमो मतः
कठोपनिषदि प्रोक्तं श्वेताश्वरतर एव च॥223॥

माहात्म्यं शैवयोगस्यावर्जकं विविधं महत्।
याज्ञवल्क्यस्मृतौ योगसाधनासम्पदस्तथा॥224॥

मुद्रायाश्चापि शाम्भव्या रहस्यमुपवर्ण्यते।
प्राणायामस्य नाड्याश्च शोधनं तत्सहायकम्॥225॥

षष्ठेऽध्याये तु गीतायां योगस्य प्रक्रियां प्रति।
मुद्रा तु शाम्भवी नाम्ना सुस्पष्टं प्रतिपादिता॥226॥

दीक्षा तु योगविद्यायाः श्रीकृष्णाय कृता हि यत्।
दुर्वासोमुनिना प्रोक्तं महाभारतसाक्षिकम्॥227॥

प्राप्यते नाम दूर्वाशा मुनेरस्य तु यौगिकम्।
अश्नुते यदसौ दूर्वां दूर्वाशोऽपि ततः स्मृतः॥228॥

कुमारसम्भवे काव्ये तृतीये सर्ग एव हि।
शाम्भव्या वर्णनं चापि सुस्पष्टं विद्यते शुभम्॥229॥

स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम्।
यमक्षरं वेदविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम्॥230॥

प्रमाणीकृतवानेतदैतिह्य - पुरुषो हि यत्।
शैवधर्मस्य योगस्य साधनायाः शिवस्य च॥231॥

आसीत् सिन्धोः सुघाट्यां सत्प्रचारो लोकभावनः।
भग्नावशेषः सुस्पष्टमाहात्रत्या जनाः पुरा॥232॥

शिवस्य मातृदेव्याश्च योनिमूर्तेश्च योगिनः।
शाम्भव्याः किल मुद्राया भक्ता आसन्नुपासकाः॥233॥

आगमानां महावेत्ता सद्गुरुश्चापि सम्मतः।
दूर्वाशः कृतवान् स्तोत्रं त्रिकं भावमयं बृहत्॥234॥

परशम्भुमहिम्नस्तु योगविद्यासमाकुलम्।
स्तोत्रमादाय सम्प्रोक्तं 'महिम्नो नापरा स्तुतिः'॥235॥

श्रीत्रिपुरामहिम्नस्तु स्तोत्रे शक्तेरुपासना।
उपासनारहस्यं श्रीललितास्तवरत्नके॥236॥

परम्परागमस्येयं पुष्णात्यैश्वरमद्वयम्।
आगमसंविदि ह्येतदद्वैतं मूर्ध्नि संस्थितम्॥237॥

ग्रन्थरत्ने मदीये तन्निर्णीतं सुविचार्य तु।
अद्वैतानां चतुष्कानामीश्वराद्वैतकं महत्॥238॥

जिज्ञासा चेद् विशेषेण तत एवावगम्यताम्।
चतुर्णां ये हि सिद्धान्तास्ते संक्षेपेण दर्शिताः॥239॥

तन्त्रसंविदि मेयानां पदार्थानां विचारणा।
प्रत्यभिज्ञाख्यसिद्धान्तपोषकाणान्तु यौक्तिकी॥240॥

विहिता सिद्धिदात्र्या मे दुहित्र्याऽप्यद्वितीयया।
द्वितीयया मनोज्ञानां सर्वभावसुनिर्भरा॥241॥

श्रीमातृप्रत्यभिज्ञैषा कृच्छ्रात्सर्वान् समुद्धरेत्।
अप्राप्तमिव च प्राप्तं प्रापय्यात्ममहेश्वरम्॥242॥

स्फारयस्यखिलमात्मना स्फुरन्
विश्वमामृशसि रूपमामृशन्।
यत्स्वयं निजरसेन घूर्णसे
तत्समुल्लसति भावमण्डलम्॥243॥

एषा श्रीचन्द्रिका सूक्तिः पञ्चकृत्यस्वभावताम्।
स्वात्मनो हि महेशस्य सतो याति त्वनेकताम्॥244॥

अहमात्म भवेज्ज्ञानं सैव ज्ञानक्रियात्मिका।
चित्ता स्वतन्त्रता शक्तिः परा वाक् सुशिवात्मता॥245॥

मय्यवस्थातरि ह्येकस्मिन्नेव तद्वति प्रभौ।
वस्था बाल्यादयो ज्ञत्वादयो भान्ति विकल्पनाः॥246॥

सकृत्प्रकाशमानोऽहं निखिलस्यावभासकः।
विश्वाकारो निराकारो भामि बोधमहेश्वरः॥247॥

जननशैशवयौवनवार्द्धक-
व्ययमयैरखिलैरपि सन्धिभिः।
अभिनयन्नपि पौरुषनाटकं
परिणतौ स शिवोऽस्मि महानटः॥248॥

शास्त्रतो गुरुतो वाऽऽत्मप्रत्यभिज्ञा स्वतोऽपि वा।
आत्माहं विश्ववेद्यस्येत्युदिता चावबोधयेत्॥249॥

प्रत्येम्यनधिकं स्वच्छं नो विश्वमधिकं स्वतः।
विमर्शः परमा शक्तिः प्रकाशाख्यमहेशितुः॥250॥

मातृमेयमिति साधनात्मिका
त्वत्कृतोन्मिषति या विकल्पधीः।
त्वत्स्वरूपमकलङ्कितं तया
कस्य देवि विदुषो न मुक्तता॥251॥

देवी स्वातन्त्र्यशक्तिस्तु सर्वमात्मनि भासयेत्।
स्थापयेत्संहरेच्चापि विमर्शः सर्वसाधकः॥252॥

नोपपत्त्यै त्वविद्यादेः पारवश्यमिहेष्यते।
स्वस्मिन्नेव स्वशक्त्याऽयं विमलो बोधभैरवः॥253॥

प्रतिबिम्बितविश्वन्तु बोधाद् भिन्नं प्रकाशयेत्।
अन्योन्यं सुखनीलादेर्भिन्नतां च प्रकाशयेत्॥254॥

सर्वंसहो विमर्शोऽयमात्मानं कुरुते परम्।
परं चात्मीकरोत्येष द्वयं स्वीकृत्य भासते॥255॥

न्यग्भावमुभयोः कृत्वा स्वच्छन्दो स्वेच्छया चलेत्।
स्वातन्त्र्यं तत्परां शक्तिं विमर्शं सुशिवां श्रये॥256॥

'योऽविकल्पमिदमर्थमण्डलं
पश्यतीश निखिलं भवद्वपुः।
स्वात्ममात्रपरिपूरिते जग-
त्यस्य नित्यसुखिनः कुतोभयम्॥257॥

सत्कार्यवादी शिवकारणो यो
बिम्बानपेक्षः प्रतिबिम्बवादी।
आभासवादी न समर्पकोऽन्यो
योऽख्यातिवादी चितिसन्महार्थः ॥258॥

प्रकाशपरमार्थं यं विमर्शेनाभिमण्डितम्।
न्यायाद्यागमसन्नद्धोऽब्धिं समाप्यैति पूर्णताम्॥259॥

विश्वत्र भावपटले परिजृम्भमाण-
विच्छेदशून्यपरमार्थचमत्कृतिर्या ।
तां पूर्णवृत्त्यहमितिप्रथनस्वभावां
स्वात्मस्थितिं स्वरसतः प्रणमामि देवीम्॥260॥

यं प्राप्य सर्वागमसिन्धुसंघ-
पूर्णत्वमभ्येति कृतार्थतां च।
तं नौम्यहं शाम्भवतत्त्वचिन्ता-
रत्नौघसारं परमागमाब्धिम्॥261॥

आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ।
मतं च वासुदेवस्य तस्मादागम उच्यते॥262॥

परं परस्थं गहनादनादिमेकं निविष्टं बहुधा गुहासु।
सर्वालयं सर्वचराचरस्थं त्वामेव शम्भुं शरणं प्रपद्ये॥263॥

शक्त्यण्डमृत्पिण्डमुपाददानो
मायाण्डचक्रभ्रमण- क्रमेण।
मूलाण्डदण्डेन मुहुर्विधत्ते
ब्रह्माण्डभाण्डं भगवान् कुलालः॥264॥

अन्तर्विभाति सकलं जगदात्मनीह
यद्वद् विचित्ररचना मुकुरान्तराले।
बोधः पुनर्निजविमर्शनसारयुक्त्या
विश्वं परामृशति नो मुकुरस्तथा तु॥265॥

अनाप्तानुक्तवाक्यानामविच्छेदेन वर्त्मना।
पारम्पर्येण तन्वानास्तात्पर्यं गुरवः सदा॥266॥

अनुग्रहैकशीलास्तु विधृतेश्वरविग्रहाः।
विशदीकृत्य सच्छास्त्रं प्रत्यभिज्ञासमाख्यकम्॥267॥

सचेतसश्चमत्कृत्य प्रत्यभिज्ञाप्य पूर्णताम्।
शिवतां नित्यसिद्धान्तु लम्भयन्ति शिवाश्रितान्॥268॥

आगमं भगवान् प्राह प्रत्यभिज्ञैकजीवितम्।
आनन्दामृतसम्प्राप्त्यै दुःखानां विनिवृत्तये॥269॥

वर्तमानस्य वेद्यस्य ह्यतीतस्य भविष्यतः।
आत्मा प्रकाश एवास्ति स्वभावः सर्वसम्मतः॥270॥

स्वातन्त्र्येण स्वभावेन प्रकाशाख्यो महेश्वरः।
इदन्तया विमृश्येन तत्तद्रूपेण भासते॥271॥

ज्योतिरेकं शिवो वाच्यः शक्तिर्वा प्रोच्यतां मुदा।
शिवः प्रकाश इत्युक्तो विमर्शः शक्तिरुच्यते॥272॥

अनयोः सामरस्यन्तु संविदित्यभिधीयते।
वेद्यव्यक्तिस्तु नो भाति प्रकाशेन विना क्वचित्॥273॥

प्रकाशवेद्यमुल्लङ्घ्य भावानामप्रकाशनात्।
प्रकाशसारता तेषामागमे समुपास्यते॥274॥

स च प्रकाशो नानेक एक एव यतः किल।
न भिद्यते प्रकाशोऽतो विषयान्न स्वरूपतः॥275॥

स्वरूपाद् यदि भिद्येत प्रकाशान्तरतो हि सः।
भवेदन्यतरस्यैवं प्रकाशस्याप्रकाशता॥276॥

विषयादपि नो भेदः प्रकाशस्यास्य सम्भवेत्।
विषयः स्वं न जानीते नीलं वा सुखमेव वा॥277॥

कथं भिन्द्यात् प्रकाशं स प्रकाशस्योपजीवकः।
प्रकाशेन कृते भेदे भिन्नैस्तैर्नापि भिद्यते॥278॥

अन्योन्याश्रयतापत्तिर्दुर्वारा वार्यतां कथम्।
वेद्यवर्गः समस्तोऽयं तद्भेदो वा विभाति यत्॥279॥

स संविदेव भातत्वाद् निष्कर्षः प्राप्यते ततः।
विश्वप्रकाशनं तस्मादात्मप्रकाश इष्यताम्॥280॥

संवित्तिः स्वप्रकाशार्थं नान्यत् किञ्चिदपेक्षते।
स्वयम्प्रकाशते यस्मात् प्रकाशान्तरमस्ति नो॥281॥

देशकालक्रमाणां यत् प्रकाशकतया स्थितः।
तस्मादेते प्रकाशस्य भेदनं कर्तुमक्षमाः॥282॥

भावाभावस्वरूपस्य विश्वस्य जगतस्ततः।
स्वभावस्तु प्रकाशोऽयं स्वात्मैष भवतामपि॥283॥

यावन्न वेदका एते तावद् वेद्याः कथं प्रिये।
भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः॥284॥

नियत्यतिक्रमादेषा संविद्या विश्वरूपिणी।
देशकालाद्यवच्छेदवर्जिता व्यापिका मता॥285॥

आद्यन्तवर्जिता नित्या विश्वाकृतिरनाकृतिः।
निरपेक्षाऽस्त्यतः पूर्णा स्वतन्त्रा सर्वभासिका॥286॥

विश्वभावस्वरूपासौ स्वातन्त्र्यरसनिर्भरा।
अचिन्त्यविभवा पूज्या माहैश्वर्यादविच्युता॥287॥

यस्यां संविदि सर्वोऽयं वेद्यवर्गो विभासते।
प्रतिबिम्बतया सोऽहं भामि सर्वेश्वरः शिवः॥288॥

प्रकाशो न ततो भिन्नो भवानहमिव स्थितः।
यच्च प्रकाशते विश्वं प्रकाशेऽहं भवानिव॥289॥

स्वयन्त्वेनानुवेधो यः प्रकाशस्य समन्ततः।
स्वयमस्मि स्वयं चासि स्वयं सर्वो हि राजते॥290॥

स्वपरामर्शनात्माऽसौ शक्तिः स्वातन्त्र्यसंज्ञिका।
प्रतिबिम्बतया विश्वं भासयेत् स्वात्मदर्पणे॥291॥

एषा चागममर्यादा शक्तिपातपवित्रितः।
अनुपायेन शैवेन शाक्तेनाऽथाऽऽणवेन वा॥292॥

श्रीसद्गुरोः कृपापूतः प्रत्यभिज्ञासमाश्रितः।
चमत्कृतः समाप्नोति स्वाकृत्रिमप्रमातृताम्॥293॥

स्वपरामर्शनस्यास्ति जीवने किं प्रयोजनम्।
इति चेदुच्यते सम्यक्तया तदवधार्यताम्॥294॥

अध्यात्मविद्या विद्यानां गिरामस्म्येकमक्षरम्।
वयमेतद्धि जानीमो धन्येयं संस्कृतिस्ततः॥295॥

अध्यात्मशास्त्रमध्येयमात्रं नेष्टं हि भारते।
जीवनस्य तु संकोचः सकलो ह्यपसार्यते॥296॥

अधुना यद्वयं जीवाः प्राणितामुत्सहामहे।
जननमरणाभ्यां यद् भयं बन्धोऽथवा भवेत्॥297॥

स्वापरामर्शनं हेतुरपराधः प्रकीर्तितः।
विच्युतिः शिवरूपात्तु तस्य प्रतिफलं मतम्॥298॥

अपराधो महानेष स्वापरामर्शनं हि यत्।
अन्तिकस्थोऽपि येनासौ शिवो दूरातिदूरगः॥299॥

गुरुतो ह्यात्मनो ज्ञानं शास्त्रीयमनुभूयते।
यज्ज्ञायते स्वयं तत्तु नात्मज्ञानं भवेत् क्वचित्॥300॥

नात्मा सर्वात्मनाऽज्ञातो ज्ञातो वा जीवतामयम्।
अपूर्णमात्मनो ज्ञानम् अज्ञानं प्रोच्यते बुधैः॥301॥

यत्तु ज्ञानं भवेत् पूर्णं तदज्ञानविनाशकम्।
पूर्णतां स्वामभिज्ञाय नष्टाज्ञानस्तु मुक्तिभाक्॥302॥

अज्ञानमिति न ज्ञानाभावश्चातिप्रसङ्गतः।
स हि लोष्ठादिकेऽप्यस्ति न च तस्यास्ति संसृतिः॥303॥

अतो ज्ञेयस्य तत्त्वस्य सामस्त्येनाप्रथात्मकम्।
ज्ञानमेव तदज्ञानं शिवसूत्रेषु भाषितम्॥304॥

प्रत्यभिज्ञासमापत्त्या पूर्णज्ञानविजृम्भणम्।
आनन्दः प्रोच्यते विद्धिः स्वात्मविश्रान्तिसंज्ञितः॥305॥

यो ह्रि स्वात्मनि विश्रान्तस्तदन्याभावयोगतः।
स्वात्मविश्रान्तिरेवैषा देवस्यानन्द उच्यते॥306॥

पुण्यानां परिपाकाद्वा सत्कर्मसु प्रवर्तनात्।
दीक्षायाः सद्गुरोः प्राप्त्या परमात्मप्रसादतः॥307॥

शास्त्रस्वाध्यायतो योगाच् शास्त्रस्य सदनुग्रहात्।
उदेत्यानन्दबोधो यो हन्ति बन्धं सहेतुकम्॥308॥

ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना
न करणेन कृत्यं हि क्वापि भावनयापि वा॥309॥

मा धाव मा धाव मुधैव मोहो
न धावनं साधनमस्ति लक्ष्म्याः।
चेद्धावनं साधनमस्ति लक्ष्म्याः
श्वानं विहाय क्व नु सा प्रयायात् ॥310॥

अन्तर्मुखतया स्वेन क्रियमाणं तपः शुभम्।
ईश्वरानुग्रहो वापि जनयेज्ज्ञानमद्वयम्॥311॥

वेद्यवर्गः समस्तोऽयं यत्प्रकाशेन दीप्यते।
तस्य प्रकाशनं स्वस्मात् परस्माद् वा भवेदिति॥312॥

अनवस्थाख्यदोषस्य यद् भवेदपसारणम्।
प्रकाशते स्वतन्त्रोऽसौ प्रकाशः स्वयमेव तत्॥313॥

तस्य देवाधिदेवस्य परबोधस्वरूपिणः।
विमर्शः परमा शक्तिः सर्वज्ञा ज्ञानशालिनी॥314॥

मदमात्सर्य - सन्त्यागान्मानगर्वतमःक्षयात्।
लभ्यते शाश्वतो नित्यः स्वात्मदेवो ह्यनुत्तरः॥315॥

ज्ञानस्य परमा भूमिर्योगस्य परमा दशा।
त्वद्भक्तिर्या विभो कर्हि पूर्णा मे स्यात्तदर्थिता॥316॥

शिवो रात्रिः शिवो वह्निः पक्तृत्वात् स पुरोहितः।
तत्रस्था देवताः सर्वा द्योतयन्त्योऽखिलं जगत्॥317॥

कुलं च परमेशस्य शक्तिः सामर्थ्यमूर्ध्वता।
स्वातन्त्र्यमोजो वीर्यं च पिण्डः संविच्छरीरकम्॥318॥

न सन्न चासत् सदसन्न च तन्नोभयोज्झितम्।
दुर्विज्ञेया हि साऽवस्था किमप्येतदनुत्तरम्॥319॥

काऽप्यवस्था न ते देव यस्यां संविन्न वर्तते।
तेन चिद्घनमेव त्वां योगिनः पर्युपासते॥320॥

चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता।
सा स्फुरत्ता तथोन्मेषः स्पन्दोऽहमिति वोच्यते॥321॥

सर्वत्र भावपटलेन विजृम्भमाण-
विच्छेदशून्यपरमार्थचमत्कृतिर्या ।
तां पूर्णवृत्त्यहमिति प्रथनस्वभावां
स्वात्मस्थितिं स्वरसतः प्रणमामि देवीम्॥322॥

न शिवेन विना देवी न देव्या च विना शिवः।
नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव॥323॥

न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।
शिवः शक्तस्तथाभावानिच्छया कर्तुमीहते॥324॥

यथाऽऽलोकेन दीपस्य किरणैर्भास्करस्य च।
ज्ञायते दिग्विभावादि तद्वच्छक्त्या शिवः प्रिये॥325॥

चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः॥326॥

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः॥327॥

स्पन्दो भागवतो यस्तु सा स्फुरत्ता निगद्यते।
द्विविधा श्रुतिरुक्ता सा वैदिकी तान्त्रिकी मता॥328॥

हारीतस्मृतिसम्प्रोक्ता श्रुतिर्मुक्तावलौ स्मृता।
तत्र स्तुत्यतमः प्रोक्तः श्रुतो विश्वेश्वरः शिवः॥329॥

चिदानन्दमये स्वाङ्गे विश्वालेख्यविधायिने।
सर्वाद्भुतोद्भवे भूम्यै नमो विषमचक्षुषे॥330॥

स्पन्दस्य संविदः स्तुत्यं कृत्यं स्वाभाविकं महत्।
ईशं योऽनन्तरूपेण भासयेन्नावरोधयेत्॥331॥

जनानां जीवने व्यापि घटते साधु युक्तिका।
जायतेऽस्तीति भावानां भिन्द्यान्नैक्यं विकारिता॥332॥

जनन-शैशव-यौवन-वार्धक-
व्ययमयैरखिलैरपि सन्धिभिः।
अभिनयन्नपि पौरुषनाटकं
परिणतौ स शिवोऽस्मि महानटः॥333॥

मातृता मेयता वापि घटते या विकल्पधीः।
मच्छक्तिजा न मां भिन्द्याद् अविकल्पे समुत्थिता॥334॥

अविकल्पिनमात्मानं विकल्पान्निज–शक्तिजान्।
जानन्नित्यसुखी योगी श्रीगुरोः सदनुग्रहात्॥335॥

योऽविकल्पमिदमर्थमण्डलं
पश्यतीश निखिलं भवद्वपुः।
स्वात्ममात्रपरिपूरिते जग-
त्यस्य नित्यसुखिनः कुतो भयम्॥336॥

स्वात्मनि या विभौभान्ति विकल्पाः शक्तयः स्वयम्।
ऐश्वर्यं विभुतां नित्यामात्मनो बोधयन्ति ताः॥337॥

इदमात्मतया भान्ति विकल्पा विविधा मम।
अहमात्मनि भित्तौ ता अविकल्पसमाश्रिताः॥338॥

अविकल्पक–बोधाब्धौ तरङ्गाः स्युर्विकल्पनाः।
सम्पूर्णा भात्यहंवृत्तिरिदन्तानां प्रकाशिका॥339॥

विश्वत्र भावपटले परिजृम्भमाण-
विच्छेदशून्य - परमार्थचमत्कृतिर्या।
तां पूर्णवृत्त्यहमिति प्रथनस्वभावां
स्वात्मस्थितिं स्वरसतः प्रणमामि देवीम्॥340॥

समारम्भ – समायुक्तः शिवः स्पन्दनभूषणः।
शिरोघर्ममपाकर्तुं चन्द्रं चामरतां नयेत्॥341॥

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे॥342॥

चिद्घनः शिव इत्युक्तो ललिता शक्तिरुच्यते।
शिवशक्त्योर्भिदा नास्ति सदा विष्णुतया सतोः॥343॥

सोऽहमस्मि शिवो विष्णुर्ललिता सास्मि वा स्वयम्।
विश्वरूपस्तदुत्तीर्णो भवन्भामि सदा स्थिरः॥344॥

अभिज्ञापरमार्थत्वमागमस्योप - संदिशन् ।
ईश्वरः शिवया स्तुत्यः सर्वानुग्रहकृन्महान्॥345॥

अन्वर्थमागमं शब्दं व्याख्यातुं शक्तिमाह यत्।
अक्षरानुगमुत्कृष्टं सर्वभावावबोधकम्॥346॥

नेदृशो भगवन् भाति भवान्नैवापि तादृशः।
कीदृशेत्यनुयोगेन शून्यो भाति न यादृशः॥347॥

सर्वरूपतया भाति स्वस्वरूपादविच्युतः।
भेदेनानवभासित्वे सार्वात्म्यं युज्यतां कथम्॥348॥

नासीदृशस्त्वं न च तादृशस्त्वं
त्वं कीदृशोऽसीत्यनुयोग - शून्यः।
त्वं यादृशोऽसीत्यपि नैव वक्तुं
योग्योऽसि शम्भो! त्वमसि त्वमेव॥349॥

नोत्पद्यते कदाप्येष ह्यक्रमो क्रमभासकः।
कालो यस्माद् विजायेत तत्र का कालकल्पना॥350॥

क्रमाक्रमकथातीते स्वस्मिन् सन्ति न तत्त्वतः।
सदा यदा तदेत्यादि कालकेलि विकल्पनाः॥351॥

अस्वतन्त्रा पराधीना स्पृशेत् कालकला कथम्।
स्वतन्त्रं स्ववशं दिव्यं शिवमीश्वरमद्वयम्॥352॥

न च कालकलाभिः स स्पृश्यते परमेश्वरः।
नहि तासां स्वतन्त्रास्ति स्थितिस्तत्कल्पनां विना॥353॥

स्फुरत्ता स्पन्द ऊर्मिर्वा विमर्श–पदवीं स्पृशेत्।
अहन्ता ह्यक्रमा प्रोक्ता क्रमतेच्छादिरूपिणी॥354॥

स्वाभाविकी स्फुरत्ता या विमर्शाख्या पराभिधा।
अक्रमा क्रमरूपेव सेच्छा–ज्ञान–क्रियात्मिका॥355॥

अभिन्नैषा भवेद् भिन्ना शक्तिरेका त्रिशक्तिका।
देवो वा प्रोच्यतां देवी वस्तु नानात्मकं न हि॥356॥

एकस्यानेकतापत्तिः स्वातन्त्र्यमुच्यते प्रभोः।
स्वतन्त्रः शिव इत्युक्तः स्वातन्त्र्यं शक्तिरिष्यते॥357॥

सुमेरुः परमाणुर्वा समाधिर्व्युत्थितिस्तथा।
न शिवेन विना भाति न वा भाति विना शिवाम्॥358॥

सैका सत्यप्यनेकत्वं गच्छतीति पिनाकिना।
मालिनीविजये प्रोक्तं वार्तिके प्रकटीकृतम्॥359॥

शिवमामर्शयन्ती तु शक्तिरुक्ताहमात्मिका।
स्वयं शिवे भासमाना स्वस्यां भासयते शिवम्॥360॥

स्वामभिन्नां शिवात् कुर्याच् शिवं स्वस्या अभिन्नकम्।
चैतन्यं शक्तिरिच्छा दृक् स्फुरत्ता स्पन्द उच्यते॥361॥

प्रथमस्तु परस्पन्दो विशेषस्तु द्वितीयकः।
सामान्यात्मा परस्पन्दो भेदात्मा तु विशेषकः॥362॥

आनन्दात्मा परस्पन्दः स्वकं रूपमकृत्रिमम्।
विशेषः प्रोच्यते स्पन्दः क्षुधानिद्रादि कृत्रिमम्॥363॥

प्रोच्यते स परस्पन्दः पूर्णा या शिवता स्फुरेत्।
विशेषस्पन्द इत्युक्तः पूर्णा दृक् शक्तिरम्बिका॥364॥

स्पन्दयोरनयोरेकतरो नूनं प्रकाशते।
एनेन तु विना नैव शिवः संस्थातुमर्हति॥365॥

अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद् घटादिवत्॥366॥

कर्ता ज्ञाता प्रकाशाख्य आदिसिद्धो महेश्वरः।
उपादेयं न वा हेयं किञ्चिदत्र प्रकीर्तितम्॥367॥

शेते सर्वं जगद् यस्मिन् स शिवः प्रोच्यते बुधैः।
अदादौ पठितो धातुः शीङ् स्वप्नार्थक आदृतः॥368॥

शो तनूकरणे प्रोक्तः दुर्बलीकरणार्थकः।
दैवादिकस्ततो दुःखपापानां शमनः शिवः॥369॥

सर्वसृष्टेरधिष्ठानं कल्याणशतकृन्महान्।
अनुग्रहाख्यकृत्येन सर्वजीवान् समुद्धरेत्॥370॥

शिवः स्वातन्त्र्यदृक् प्रोक्तः पञ्चकृत्यपरायणः।
षट्त्रिंशत्-तत्त्वसम्भोगकारको मोक्षदश्च सः॥371॥

पुराणप्रथितः सर्वलोकसंविदितो महान्।
प्रसिद्ध्याऽथागमोक्त्या चानुमानादिविबोधितः॥372॥

ईश्वरः सर्वभूतानां हृद्-देशे संस्थितः सदा।
सैष स्वात्मतया भात आभिमुख्येन सन्धितः॥373॥

तनुते प्रत्यभिज्ञां स्वां 'स एवास्म्यहमीश्वरः।'
माहात्म्यं तत एवास्ति दीक्षाया आगमे महत्॥374॥

नादीक्षितस्य संवित्तिदेव्या कस्यचनाऽपि वा।
स्वात्मनः प्रत्यभिज्ञैषा समुदेति कथंचन॥375॥

ईश्वर – प्रत्यभिज्ञाया विमर्शिन्यां विशेषतः।
प्रत्यभिज्ञापदार्थस्य व्युत्पत्त्यार्थः प्रकाशितः॥376॥

ज्ञानं प्रतीपमाख्यातुं प्रकाशोऽभिमुखः शिवः।
प्रत्यभिज्ञा त्वभिज्ञानं स्वात्मनः परमेशता॥377॥

शिवादिसकलात्मान्ताः शक्तिमन्तः प्रकीर्तिताः।
प्रमातारस्तु सप्तैते कृत्रिमाकृत्रिमत्वतः॥378॥

शिवस्तु प्रथमो माता ततो मन्त्रमहेश्वरः।
मन्त्रेश्वरस्तृतीयस्तु चतुर्थो मन्त्र उच्यते॥379॥

विज्ञानाकल इत्युक्तस्ततस्तु प्रलयाकलः।
सप्तमः सकलो ज्ञेयः सप्तामी मातरः स्मृताः॥380॥

सकलस्य तु शक्तिर्या तन्मानं करणं स्मृतम्।
बुद्धीन्द्रियं भवेद्विद्या कला कर्मेन्द्रियं स्मृतम्॥381॥

या प्रलयाकले शक्तिः प्रसुप्ता सा मता बुधैः।
विद्याऽस्फुटा कला चेति मानं तत् करणं स्मृतम्॥382॥

विज्ञानाकलसंज्ञस्य विद्याऽशुद्धा तथा कला।
उभयोरिष्यते तावद् विनाशोन्मुखता त्विह॥383॥

अशुद्धयोः कलाविद्यातत्त्वयोर्ध्वंस इष्यते।
तत्संस्कारसाचिव्ये शुद्धा विद्योद्बुभुत्सुका॥384॥

सैषा मन्त्रस्य सम्प्रोक्ता शक्तिर्या करणात्मिका।
मन्त्रेश्वरप्रमातुस्तु बुद्धा शक्तिर्मता हि सा॥385॥

विद्या नश्यदवस्थात्म–संस्कारेणान्विता तु या।
विद्यायाश्च कलायाश्च करणात्मा व्यवस्थिता॥386॥

मन्त्रमहेश्वरो यस्तु प्रमाता षष्ठ उच्यते।
तच्छक्तिः शुद्धविद्या तु करणात्मतया स्थिता॥387॥

अकृत्रिमः प्रमाताऽऽस्ते शक्त्याख्यः शिव एव वा।
यदृच्छैवेष्यते सद्भिः प्रमाता त्वेक एव हि॥388॥

स्वातन्त्र्यं तस्य शक्तिस्तु करणात्मा विभाव्यते।
प्रमातॄणां सुसूक्ष्मैषा नान्यत्राऽऽस्ते विचारणा॥389॥

पूर्णप्रमातृता सैषा सर्वेषां सम्भवेन्नहि।
वैलक्षण्यमतः प्राहुः साधनानां समन्ततः॥390॥

सर्वथाऽभेदनिष्ठत्वं प्रमातॄणां शिवात्मनाम्।
ततस्त्वेषां तु सर्वत्राऽहंविमर्शोऽभ्युदेति हि॥391॥

अहमिदमिति प्राहुर्मन्त्रमहेश्वरात्मनाम्।
मन्त्रेश्वर-प्रमातॄणामिदमहमिति स्थितिः॥392॥

मन्त्रप्रमातुर्विद्यास्थ - विद्येश्वर - पदात्मनः।
भेददृष्टिजुषो मर्शस्त्वहमहमिदन्त्विदम्॥393॥

शुद्धस्य संविदो ह्यत्र मानमैश्वर्यमण्डितम्।
विज्ञानाकलमातॄणां मर्श ऐश्वर्य–वर्जितः॥394॥

गृह्णन्त्यात्मतया ये ते संवित्तेः सुखमुत्तमम्।
प्राणं परिमितां वाऽन्यां क्रियाशून्यान्तु संविदम्॥395॥

सुषुप्तप्रायतां यान्ति प्रलयाकलमातरः।
कर्मपाशेन बद्धानां मातॄणां सकलात्मनाम्॥396॥

संसारसागरे भूयः पालनं नावरुध्यते।
ये सकलप्रमातारो मायागर्भे लुठन्ति हि॥397॥

आवृताः परतन्त्रास्ते ह्याणवादिमलत्रयैः।
जीवोऽणुः पुद्गलो बद्धः कीर्त्यन्ते पुरुषस्तथा॥398॥

स्थावरान्तास्तु देवाद्या मातरः सकलाः स्मृताः।
भगवान् गहनेशो योऽनन्तनाथो दिनात्यये॥399॥

पुरुषं प्रकृतिं चैव कञ्चुकपञ्चकं तथा।
विलापयति मायायां विलयः प्रलयः स तु॥400॥

मायाण्डे या भवेद् रात्रिः सैष प्रलय उच्यते।
गुप्तो गुरुस्ततः प्राह श्रीतन्त्रालोकषष्ठके॥401॥

एवमव्यक्तकालन्तु परार्द्धैर्दशभिर्नहि।
मायाधस्तावती रात्रिर्भवेत् प्रलय एष सः॥402॥

गहनेशस्य रात्रौ यन्मायामध्ये विलीयते।
कलादिप्रकृतिप्रान्तं प्रलयः सोभिधीयते॥403॥

अत्रेदमवधेयन्तु भुवनानां लयो भुवि।
करणानामथ कार्याणां प्रकृतौ यल्लयः स तु॥404॥

अवान्तरलयः प्रोक्तः प्रलयः प्रोच्यतेऽधुना।
पुम्प्रकृत्योस्तु मायायां कञ्चुकैस्तु समं लयः॥405॥

गहनेशनिशायान्तु प्रलयोऽसौ तृतीयकः।
यस्तु सदाशिवादीनां समनायां लयः श्रुतः॥406॥

स महाप्रलयः प्रोक्तश्चतुर्धा तु लयः स्मृतः।
तदुक्तं गुरुणा सम्यक् श्री-तन्त्रालोकषष्ठके॥407॥

'चत्वार एते प्रलया मुख्याः सर्गाश्च तत्कलाः।
भूमूलनैशशक्तिस्थास् तदेवाण्ड - चतुष्टयम्'॥408॥

प्रलयकेवला एव प्रलयाकलसंज्ञकाः।
प्रोक्ताः शून्यप्रमातारो मायायां मेयसंल्लयात्॥409॥

'शून्याद्यंशे तु संकोचादपवेद्य - सुषुप्तके।
बुद्ध्यादौ वाथ संकोचात् स्यात् सवेद्यसुषुप्तके॥410॥

वियोगः स्थूलयोर्यस्तु कार्यकारणयोर्गुरोः।
गुरुर्गुरु - विमर्शिन्यां तमाह प्रलयाकलम्॥411॥

यः स्वात्मनस्तु कर्तृत्वशक्तिं प्रत्यभिमानवान्।
शून्यं प्राणमथो बुद्धिमात्मत्वेनाभि - मन्यते॥412॥

अबोधमेव यत्तस्मादुच्यते प्रलयाकलः।
करणान्यस्य लीयन्ते प्रकृतौ देहपातने॥413॥

करणप्रलयस्त्वेष प्रोच्यते तदनन्तरम्।
श्रयते शून्यताप्रायामवस्थां साधकस्त्वसौ॥414॥

अवान्तरो भवेद् यावत् प्रलयस्तावदेव हि।
प्रकृतौ क्षोभितायान्तु श्रीकण्ठनाथनोदनात्॥415॥

शुद्धप्रबुद्धवद्याति करणं बहिरान्तरम्।
सौषुप्ते तु पदे तिष्ठन्नुच्यते प्रलयाकलः॥416॥

सांख्ये प्रोक्तन्तु कैवल्यं न्याये प्रोक्तोऽपवर्गकः।
निर्वाणं प्रोच्यते बौद्धैः प्रलयाकल उच्यते॥417॥

कार्मो मलोऽक्षमस्तस्य वासनात्मतया स्थितः।
मायीयस्तु विकल्पेन प्राहैतदुत्पलो गुरुः॥418॥

शून्याद्यबोधरूपास्तु कर्तारः प्रलयाकलाः।
तेषां कार्मो मलोऽप्यस्ति मायीयस्तु विकल्पितः॥419॥

भाविनीं योग्यतां धृत्वा सुषुप्तस्यापि मातृता।
श्रीतन्त्रालोकसद्ग्रन्थे गुरुणा तूपपादिता॥420॥

'तथाहि गाढनिद्रेऽपि प्रियेऽनाशङ्कितागमाम्।
मां द्रक्ष्यतीति नाङ्गेषु स्वेषु मात्यभिसारिका'॥421॥

प्रलयाकलविज्ञानाकलयोस्तु सुषुप्तता।
विज्ञानकेवलः शुद्धः प्राह श्रीशम्भुसद्गुरुः॥422॥

प्रकाशैकघनं स्वन्तु जानन् विज्ञानकेवलः।
क्रियास्वातन्त्र्यशून्यः स्यात् सांख्यस्य पुरुषो यथा॥423॥

'शुद्धबोधात्मकत्वेऽपि येषां नोत्तमकर्तृता।
निर्मिताः स्वात्मनो भिन्ना भर्त्रा ते कर्तृताऽत्ययात्'॥424॥

आणवेन युतो मायामलेन परिवर्जितः।
कार्मप्रभावराहित्याच्छुद्धबोधात्मता मता॥425॥

'निष्कर्मा हि स्थिते मूलमलेऽप्यज्ञाननामनि।
वैचित्र्यकारणाभावान्नोर्ध्वं सरति नाप्यधः'॥426॥

केवलं पारिमित्येन शिवाभेदमसंस्पृशन्।
विज्ञानकेवली प्रोक्तः शुद्धचिन्मात्र–संस्थितः॥427॥

अस्य च कर्मकर्तृत्वाभिमानरहितत्वतः।
कर्मकर्तृत्वयोस्तावत् संस्काररहितत्वता॥428॥

सन्त्यक्तकर्म - संस्कारो नाहं कर्तेति भावनात्।
संकोचध्वंस - शून्योपि मन्त्रमातृत्वमाप्नुयात्॥429॥

शिवत्वमप्यवाप्नोति शिवानुग्रहतो ह्यसौ।
निग्रहेऽनुग्रहे शक्तो विद्यां गृह्णात्यथो कलाम्॥430॥

करणत्वेन पुण्यात्मा नाधो गच्छति जातुचित्।
चतुर्धैतस्य बोधस्तु शास्त्रकृद्भिर्निरूपितः॥431॥

केचिन्मन्त्रेश्वरत्वन्तु मन्त्रमहेश्वरत्वकम्।
उत्कर्षमनयोः प्राहुः साधनासिद्धिमण्डिताः॥432॥

कश्चिन्मन्त्रत्वमाप्नोति संसारी निगृही भवन्।
अनुग्रही च लीलार्थमवतारस्वरूपधृक्॥433॥

उभयोरवरत्वं हि प्राहुः शास्त्रविशारदाः।
तत एव तु सम्प्रोक्तं तन्त्रालोके स्फुटं वचः॥434॥

'ज्ञानाकलोऽपि मन्त्रेशमहेशत्वाय बुध्यते।
मन्त्रादित्वाय वा जातु जातु संसृतयेऽपि वा'॥435॥

अधो या शुद्धविद्याया मायाया उपरि स्थिता।
महामाया द्विधा प्रोक्ता ह्युत्कृष्टा ह्यवरापि वा॥436॥

उत्कृष्टायान्तु मन्त्रेशो विज्ञानकेवलोऽन्यतः।
मन्त्रादिवेद्यभूतत्वं विज्ञानकेवलस्य हि॥437॥

ईश्वरप्रत्यभिज्ञायां तत एव निरूपितम्।
तन्त्रालोकेऽपि सम्प्रोक्तं क्रमशः प्रोच्यते हि तत्॥438॥

'बोधादिलक्षणैक्येऽपि तेषामन्योन्यभिन्नता।
तथेश्वरेच्छाभेदेन ते च विज्ञानकेवलाः'॥439॥

'विज्ञानकेवलादीनां तावत्यपि न वै भिदा।
शिवस्वाच्छन्द्यमात्रन्तु भेदायैषां विजृम्भते'॥440॥

विषयज्ञानमेतस्य निषिद्धं विद्यते यतः।
अहमात्मचमत्कृत्या वर्जितस्य सततस्ततः॥441॥

विज्ञानकेवले कार्मो मलो दिध्वंसिषुर्मतः।
ततः प्राकृतसृष्टौ स न संसरति कर्हिचित्॥442॥

तन्त्रालोककृता प्रोक्तं न हेतुः कर्मणो मलः।
विज्ञाने प्रलये चापि वेदनैर्वर्जिते चितिः॥443॥

'अतः प्रध्वंसनौन्मुख्यखिलीभूत – स्वशक्तिकः।
कर्मणो हेतुतामेतु मलः कथमिवोच्यताम्'॥444॥

'श्रूयतां संविदैकात्म्यतत्त्वेऽस्मिन् संव्यवस्थिते।
जडेऽपि चितिरस्त्येव भोत्स्यमाने तु का कथा'॥445॥

उत्कृष्टा या महामाया भूमिस्तत्स्था तु मातृता।
मन्त्रनाम्नी समाख्याता विद्येश्वर - पदाभिधा॥446॥

मन्त्रप्रमाता स्वात्मानं शुद्ध-संविन्मयं स्फुरेत्।
स्वातन्त्र्यं स्वस्वभावन्तु स्वात्मशक्तिं न विस्मरेत्॥447॥

स्वातन्त्र्यं संविदन्नेष वेद्यं पश्येदिदन्तया।
भेददृष्टिर्यतो मायामलः सैकमलः स्मृतः॥448॥

मननात् स्वस्वरूपस्य विमर्शात्, त्राणतः सृतेः।
मन्त्रेति नामधेयन्तु भात्यन्वर्थं प्रमातृगम्॥449॥

शुद्धविद्याभिधाने तु तत्त्वे या प्रभुता स्थिता।
मन्त्रप्रमातुरन्वर्था विद्येश्वरपदाभिधा॥450॥

मन्त्रप्रमातृवर्गस्य सत्स्वामीभगवान् मतः।
अनन्तनाथसंज्ञस्तु साञ्जनस्येतरस्य च॥451॥

विग्रहपञ्चकं यस्मादीशानादि शिवस्य तु।
मन्त्रसंविन्मयं तस्मात् पञ्चमन्त्रतनुः शिवः॥452॥

मायाप्रमातरि ग्राह्ये धीर्भातीदमिति स्फुटम्।
ग्राहके त्वहमित्येषा पृथगाधारता तयोः॥453॥

तां निरस्याथ संगम्याप्येकाधिकरणं स्फुरेत्।
मन्त्रप्रमातुरेतद्धि शुद्धविद्याख्यतत्त्वकम्॥454॥

भावानां बोधसारत्वभासनाच्छुद्धता मता।
विद्यात्वं वेदनात् प्रोक्तं 'शुद्धविद्या'-सुतत्त्वकम्॥455॥

ईश्वरप्रत्यभिज्ञायां तृतीये प्रोक्तमादरात्।
'सामानाधिकरण्यं च सद्विद्याहमिदन्धियोः॥456॥

इदम्भावोपपन्नानां वेद्यभूमिमुपेयुषाम्।
भावानां बोधसारत्वाद् यथावस्त्ववलोकनात्'॥457॥

शुद्धविद्याख्यतत्त्वं यत् प्रतिबिम्बात्मकं बहिः।
तस्य बिम्बसमं वस्तु विद्याशक्तिर्महेशितुः॥458॥

येषान्तु प्रस्फुटाऽहन्ता चिन्मात्रे सुव्यवस्थिता।
तस्य शक्तिर्मता विद्या भेदरूढिसमुत्थितेः॥459॥

विद्याशक्तेर्यदोन्मेषः परमेशेच्छया भवेत्।
स्वात्मत्वेन विजानीयाद्-'अहमस्मि शिवः' पशुः॥460॥

ग्राह्यग्राहक – संस्कारशेषत्वेऽपि स्थिते सति।
योगिनो ज्ञानिनो वाऽपि यद्वस्तुप्रथनं भवेत्॥461॥

विद्यातत्त्वन्तु तत्प्रोक्तं मायाशक्तिविरोधि यत्।
स्वातन्त्र्याद् भिद्यते नैतत् तत्त्वान्तरतया स्थितम्॥462॥

प्रत्यभिज्ञा-विमर्शिन्यां परे प्राहुरिति स्मृतम्।
'यदप्ररूढभेदस्यावभासनमुदीरितम्' ॥463॥

सदाशिवेश्वरत्वं तु तत्त्वद्वयतया स्फुरेत्।
अस्फुटत्वे भवेदिच्छा स्फुटत्वे ज्ञानमिष्यते॥464॥

जाते ग्राह्यविपर्यासे भेदस्य या प्ररूढता।
स्यात्तु ग्राहकचिन्मात्ररूपतायां क्रियात्मता॥465॥

शक्तिर्नासौ पशौ तिष्ठेत् तिष्ठेद् विद्येश्वरे तु सा।
विपर्यासप्ररूढत्वे ग्राह्यस्य ग्राहकस्य च॥466॥

मायाख्या प्रथते शक्तिर्निषेधव्यापृतिःपशौ।
उभयोस्तु विपर्यास-संस्काराविनिवर्तने॥467॥

यद् वस्तुप्रथनं विद्या शक्तिः सा योगिगामिनी।
कर्तृत्वादीश्वरत्वं चेद् विद्यात्वं बोधशुद्धितः॥468॥

ईश्वर - प्रत्यभिज्ञायां तृतीये कारणात् कुतः?
विद्येश्वर - प्रमातृत्वमयमर्थो विनिश्चितः॥469॥

'बोधानामपि कर्तृत्वजुषां कार्ममलक्षतौ।
भिन्नवेद्यजुषां मायामलो विद्येश्वराश्च ते'॥470॥

शिवतत्त्वमथो शक्तितत्त्वं सदाशिवत्वकम्।
ईशो विद्येति तत्त्वानां शुद्धाध्वपञ्चकात्मता॥471॥

शिवादिपञ्चके शुद्धस्वातन्त्र्यं यत् समुल्लसेत्।
वैचित्र्येण ततः प्रोक्ता त्वेषां शुद्धाध्वनामता॥472॥

तत्त्वपञ्चकमेतद्यत्तत्र कर्ता शिवः स्वयम्।
'तदेवं पञ्चकमिदं शुद्धोऽध्वा परिभाष्यते।
तत्र साक्षाच्छिवेच्छैव कर्त्र्याभासितभेदिका॥473॥

न मलस्तत्र कार्मः स्यान्न चैवाप्याणवः स्मृतः।
संसारार्णवमुत्तीर्णः पश्येदहन्तया चितिम्॥474॥

पश्यन् वेद्यं च कार्यं च मायीयेन तनीयसा।
विद्यामध्ये महामायान्तःस्थो विद्येश्वरो मतः॥475॥

मन्त्रेत्यपर - पर्यायो देहादि–रहितत्वतः।
सजातीयाच्च वेद्याच्च पृथग्भावाभिमानवान्॥476॥

अप्रतिघातिनी विद्या क्रिया चैवापि तादृशी।
मन्त्रे सर्वज्ञता सर्वकर्तृता शास्त्रकृन्मता॥477॥

वेद्य - देहाद्यहम्भावविरहान्नास्ति मायिता।
महामायास्थितस्यास्यानन्तनाथोऽस्ति पालकः॥478॥

विद्याशक्तिर्मता विद्यातत्त्वबिम्बतया स्थिता।
महामायेति सम्प्रोक्ता क्रियाशक्तिर्विशेषिता॥479॥

तस्यैश्वर्यस्वभावस्य पशुभावे प्रकाशिका।
विद्याशक्तिर्मता प्रत्यभिज्ञाशास्त्रे सुनिर्मला॥480॥

ग्राह्यग्राहकयोरास्तां विपर्यासस्तदीयकः।
संस्कारोऽथापि योगिज्ज्ञेयं वस्तु प्रकाशते॥481॥

स्वातन्त्र्यं यत्प्रभोरेतद् मायाशक्तिं रुणद्धि हि।
तत्त्वान्तरं भवेदेतद् विद्यातत्त्वन्तु शुद्धिभूः॥482॥

माया दशा त्वणूनां या विद्या मन्त्रदशाऽथवा।
तन्मध्ये या महामाया शोध्या सा त्रिकसम्मता॥483॥

प्रमेयव्रातसम्पोष-प्रमाणपदवीं जहत्।
मातृरूपा भवेत् संविद् मन्त्राध्वत्वसमाश्रिता॥484॥

प्रमाणतां श्रितो माता प्राप्नुयात्तु पदाध्वताम्।
शब्दनं हि पुरस्कृत्य गच्छेन्माता सुमन्त्रताम्॥485॥

प्रोक्तं श्रीगुरुणा तस्माद् 'मन्त्राध्वा मातृरूपधृक्।
अयं प्रमाणतां गच्छन् प्राप्नोत्येव पदाध्वताम्'॥486॥

'तदेव च पदं मन्त्रः प्रक्षोभात् प्रच्युतं यदा।
गुप्तभाषी यतो माता तूष्णीम्भूतो व्यवस्थितः॥487॥

तथापि न विमर्शात्मरूपं त्यजति तेन सः।
प्रमाणात्मविमर्शात्मा मानवत् क्षोभभाङ् न तु॥488॥

'तथाहि चिद्विमर्शेन ग्रस्ता वाच्यदशा यदा।
शिवज्ञान - क्रियायत्तमननत्राणतत्परा॥489॥

अशेष - शक्तिपटलीलीलालम्पटपाटवात्।
च्युता मानमयाद्रूपात् संविन्मन्त्राध्वतां गता॥490॥

साधका ईश्वरे तत्त्वे मन्त्रेश्वरपदाभिधाः।
शुद्ध - संविदहन्तात्म - स्वातन्त्र्यशक्तिमण्डिताः॥491॥

सृष्ट्यर्थं रुचिमन्तो ये त्विदमहमिति स्फुटम्।
स्फुटयेदन्तया मेयं मातारो विमृशन्ति ते॥492॥

क्रियाशक्तिस्वरूपस्य बहिर्भावस्य तूच्चता।
सादाख्यात् परतो ह्यस्येश्वरस्य स्थितिरिष्यते॥493॥

मातृमान - प्रमेयात्म विश्वं स्थितमिदन्तया।
प्रमातरि विशुद्धे यदाच्छादितमहन्तया॥494॥

सामानाधिकरण्याच्च भेदाच्च मातृमेययोः।
भेदाभेदात्मतत्त्वेऽस्मिन्निदमहं विमर्श - धीः॥495॥

अहमंशविमर्शेन स्फुटं यदिदमंशकम्।
शक्तेर्यो बहिरुन्मेषः सिञ्चतीतीश्वरस्ततः॥496॥

उद्भवन् पूर्णबोधो हि यस्य मन्त्रेश्वरो हि सः।
आवृणोत्यहमेदन्तां पश्येद् विश्वमिदन्तया॥497॥

अधिष्ठातेश्वरस्तेषां भट्टारक उदाहृतः।
ज्ञातुं कर्तुं समर्थोऽसौ भगवान् विश्वशासकः॥498॥

मायाकालस्य मानं यत् परार्द्धशत-संगुणम्।
ऐश्वरे तद्दिनं तत्त्वे रात्रिश्च तत्समा भवेत्॥499॥

कर्तृत्वमीश्वरस्यैव सर्वत्र प्रविजृम्भते।
गुप्तेन गुरुणैतद्धि वार्तिके प्रकटीकृतम्॥500॥

'नहि कुम्भकृतः क्वापि कदाचित् कर्तृता भवेत्।
यदि नासौ महेशाख्यात् कर्तुरव्यतिरेकभाक्॥501॥

गृहीतोन्मेष-रूपाया बाह्येदन्ता-विभासिका।
क्रियाप्राधान्यमाश्रित्य शक्तेरीश्वरता मता॥502॥

पारमेशी तु शक्तिर्या त्रिविधा सम्प्रकीर्तिता।
अनुत्तरा तथेच्छाख्या तदन्योन्मेषशब्दभाक्॥503॥

मातृकायास्तृतीयेनार्णेनाभिव्यक्तिरिष्यते ।
शिवशक्त्योस्तु संघट्टस्येच्छाशक्तेर्विमर्शनात्॥504॥

संघट्टेऽस्मिंश्चिदात्मत्वाद् यत्तत् प्रत्यवमर्शनम्।
इच्छाशक्तिरघोराणां शक्तीनां सा परा प्रभुः॥505॥

स्वरूपपरिपूर्णस्य योमया सह वर्तते।
इच्छाख्या कलना सोमा महासृष्टिः स्मृता तु सा॥506॥

शिवदृष्टिकृता सैषा युक्त्या समुपपादिता।
'यदा तु तस्य चिद्धर्मविभवामोदजृम्भया॥507॥

विचित्ररचनानाना - कार्य - सृष्टिप्रवर्तने।
भवत्युन्मुखिता चित्ता सेच्छायाः प्रथमा तुटिः॥508॥

इच्छैव गाढभावत्वं सम्प्राप्य त्वीशनां व्रजेत्।
ईकारमातृकार्णेन व्यज्यमानां शिवेच्छया॥509॥

मन्त्रेश्वराः प्रमातारस्तत्त्वे त्वीश्वरसंज्ञके।
किञ्चिद्ध्वस्तमलाः प्रोक्ता उद्भवत्पूर्णबोधकाः॥510॥

कलाऽथाशुद्धविद्या च तयोर्ध्वंसस्य यः पुनः।
संस्कारस्तेन युक्ता तु विद्या मानतया स्फुरेत्॥511॥

मृद्-दण्ड-चक्रकादीनां कारणत्वं घटं प्रति।
न्यायदर्शनसम्प्रोक्तं युज्यते वा न युज्यते॥512॥

सम्प्रत्येष विचारो हि क्रियते सुष्ठु सद्धिया।
निर्मिमीते घटं नैव मृत्तिका दण्ड एव वा॥513॥

चक्रो वा केवलं किञ्चित् सामर्थ्यरहितत्वतः।
अन्योन्यापेक्षया तेषां निर्मातृत्वं यदुच्यते॥514॥

साऽपेक्षा मृत्तिकायां वा दण्डेऽन्यस्मिञ् जडेऽपि वा।
न वक्तुं शक्यते तस्याश्चेतनेष्वेव दर्शनात्॥515॥

तस्मान्मृदादिसापेक्षः कुलालश्चेतनो भवेत्।
घटोत्पत्तिक्षणात् पूर्वं कारणं समुपस्थितः॥516॥

यद्वदपेक्षया युक्तः कुलालः कारणं तथा।
उपादानविशेषज्ञो जगत्कार्यं प्रतीश्वरः॥517॥

तत्रापेक्षेत कर्मापि जगद्वैचित्र्यहेतुकम्।
न्यायदर्शन-सिद्धान्ते कारणं नो न युज्यते॥518॥

शाब्दिकः प्रत्यभिज्ञाविद् विजानीत उभौ यतः।
कर्तारं सुस्वतन्त्रं तन्नापेक्षान्यस्य तन्मते॥519॥

पूर्णस्वातन्त्र्यभङ्गः स्यादीश्वरोऽपेक्षतां यदि।
स्वतन्त्र ईश्वरः कर्मनिरपेक्षो जयेत् स्वयम्॥520॥

निरुपादान - सम्भारः कारणं त्रिकदर्शने।
लीलाक्रीडास्वभावोऽयं जगत्सृष्ट्यादिकर्मकृत्॥521॥

यदनन्यमुखेक्षित्वं पूर्णस्वातन्त्र्यमुच्यते।
परावलम्बिताभावादीशो हेतुरनीश्वरः॥522॥

स्वेच्छया सूक्ष्मकं स्थूलमनपेक्षो जगत् सृजेत्।
सर्वावभासकस्यास्य न किञ्चिद् भिद्यते स्वतः॥523॥

स्वशक्तौ संस्थितानेष स्वात्मन्येवावभासयेत्।
भावान् सूक्ष्मान् तथा स्थूलान् दर्पणे प्रतिबिम्बवत्॥524॥

जीवाः सन्ति मिथोभिन्ना मानमेयमयं जगत्।
मिथो भिन्नं विभात्वेतद्नेश्वराद् विद्यते पृथक्॥525॥

ईशशक्तौ स्थितं विश्वं प्रतिबिम्बं बहिःस्थितम्।
मिथो न भिद्यमानं चेद् ईश्वराद् भिद्यतां कथम्॥526॥

यथा 'वृक्षः' प्रतीतिः स्यात्तथा 'शाखाः' समुज्ज्वला।
एकत्वनानात्वभिदा भासतां शिव एककः॥527॥

यत्स्वसंवेदनं प्रोक्तं संवित्तिः सा प्रकाशिका।
जीवतादात्म्यमाख्याति स्वप्रकाशसमुज्ज्वला॥528॥

संविदो जीवतादात्म्यमुपपत्त्यापि गम्यते।
आगमाश्च शतं प्राहुः प्रत्यभिज्ञां सुनिर्मलाम्॥529॥

स्वरूपप्रत्यभिज्ञैषा स्वप्रकाशो विभाम्यहम्।
शिवोहमस्मि नान्योस्मि न म्रिये जन्मवान्न च॥530॥

शिवोऽहमानन्दघनो महेशः
स्वयम्प्रकाशश्च परप्रकाशः।

परं न नैजादपि किञ्चिदन्यत्
स्वयं परं सर्वमिदं यतोऽहम्॥531॥

शिवप्रमातृता बोधे प्रत्यभिज्ञासमुज्ज्वले।
बाह्य आभ्यन्तरो वापि नोपायः कश्चनेष्यते॥532॥

श्रीपरमेश्वरसम्भिन्नं भव्यं शैवं शिवोपमम्।
पारमेशीं शुभामिच्छामासाद्य सेवते गुरुम्॥533॥

तत्फलं दास्यमाप्नोति सुकृती यो महेशितुः।
ईश्वरप्रत्यभिज्ञाकृद् गुरुरुत्पलनामभाक्॥534॥

प्रत्यभिज्ञाप्रकाशेन जनानामुपकारकृत्।
सन्तोषं परमं वाप्तुं यत्नवान् स्तूयते बुधैः॥535॥

राज्ञा दत्ताधिकारस्य राजदासस्य दासता।
निभृतं स्तूयते यद्वद् यथेच्छमुपभुज्यते॥536॥

प्रकाशानन्दसंज्ञौ द्वौ स्वातन्त्र्यं चेति तत्त्रयम्।
परमेश्वरसद्रूपं पारमार्थिकमुच्यते॥537॥

न च तत्सम्परिच्छिन्नं यत्रास्ते स महेश्वरः।
पुराणादिषु यः सिद्ध आगमैर्विदितस्तथा॥538॥

पूर्णशक्तिः प्रसिद्धोऽसावनुमानविजृम्भितः।
विश्वदृक् विश्वसृड्भूमा स्वेच्छया यो विकस्वरः॥539॥

जुष्टःश्रीपारमेश्वर्या राजते परमेश्वरः।
स्वात्मन्यभिमुखीभूते ह्येतस्मिन् परमेश्वरे॥540॥

तच्छक्ति - प्रतिसन्धानं दृक्शक्तेः सुप्रकाशनम्।
जीवेनेहेश्वरस्यैव स्वरूपं सुविमृश्यते॥541॥

तत्फलं प्रत्यभिज्ञाया उदयः समुदाहृतः।
स एवेश्वररूपोऽहं चिदात्मा भामि सौख्यभूः॥542॥

सम्भवे प्रत्यभिज्ञायाः समर्थाचरणं हि यत्।
विपरीतसुभावात्म - प्रतिबन्धनिवारणम्॥543॥

सैषा तु प्रोच्यते तावदुपपत्तिर्गुरूदिता।
यया निवर्तते नूनं विपरीताख्यभावनम्॥544॥

यस्तिरस्कुरुते चैनामुपपत्तिं गुरूदिताम्।
अपराधस्तदीयोऽयं महार्थात् पातयेदमुम्॥545॥

स्वापरामर्शनं ह्येतदपराधो महान्ननु।
अन्तिकस्थोऽपि येनासौ शिवो दूरातिदूरगः॥546॥

ईश्वरस्य स्वरूपं स्याच्चैतन्यं शास्त्रनिश्चितम्।
जीवस्यापि स्वरूपं तच्छास्त्रकृद्भिर्विचारितम्॥547॥

ईश्वरस्यैव चैतन्यं यज्जीवे सुप्रतिष्ठितम्।
सदृशं नो न चान्यत् तदीश्वरादनपेतके॥548॥

लीलाक्रीडारसासक्तः पूर्णचैतन्यदृक् शिवः।
माययाऽसौ निषेधिन्या पञ्चकृत्यपरायणः॥549॥

भेदभासनरूपिण्या स्वातन्त्र्यशक्त्यभिन्नया।
गोपयेद् भेदयेच्चापि जीवचैतन्यमंशतः॥550॥

तस्माज्जीवे न पूर्णात्मचैतन्यं सुप्रकाशते।
यस्य त्वीश्वरचैतन्यं सम्पूर्णमवभासते॥551॥

तदपृथक्त्वसम्भाने जीवस्य स्वं प्रकाशते।
तस्येह प्रत्यभिज्ञाया हेतुता सम्प्रकीर्तिता॥552॥

दृक्क्रियात्मकशक्त्योस्तदाविष्करणमुच्यते ।
कृत्स्नप्रतीतिरीशस्य स एवास्म्यहमीश्वरः॥553॥

मायापदेऽनुमानस्य गौतमसम्मतस्य तु।
प्रामाण्यमिष्यते शैवैः सादरं तदिहोच्यते॥554॥

अयमात्मा परेशः स्यात् क्रियाज्ञानाख्यशक्तितः।
यो यावति भवेत् कर्ता ज्ञाता च तावतीश्वरः॥555॥

प्रसिद्धेश्वरवद् राजवद्वा दृष्टान्त आदृतः।
विश्वज्ञाताऽथ कर्ता चेद् जीव आत्मैष विद्यते॥556॥

ततोऽयमीश्वरो नूनं भवेदात्मा सुनिर्मलः।
परार्थादेव संसिध्येद् न्यायावयवपञ्चकात्॥557॥

कर्ता ज्ञाता भवेत् स्वात्मा ह्यादिसिद्धो महेश्वरः।
न कदाप्यन्य एव स्यादीश्वरादपृथक् स्थितः॥558॥

विचारवान् यथार्थज्ञो निषेधं सिद्धिमेव वा।
कथं कुर्यात् स्वसिद्धस्य वस्तुनोऽनपलापनात्॥559॥

मायावशान्न लक्ष्येत शक्तेराविरतो मतम्।
प्रत्यभिज्ञा ततः साध्वी प्रत्यर्च्या सम्मता बुधैः॥560॥

चिन्तयित्वा तु संक्षिप्य सर्वमेतत् सुनिर्मलम्।
प्रत्यभिज्ञाकृता प्रोक्तमुदयाकरसूनुना॥561॥

कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः॥562॥

किन्तु मोहवशादस्मिन् दृष्टेऽप्यनुपलक्षिते।
शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते॥563॥

प्रत्यक्षं यत् प्रमाणं स्यान्न सर्वत्र क्षमं हि तत्।
अनुमानं प्रमाणन्तु प्रत्यक्षमुपजीवति॥564॥

लिङ्गव्याप्त्यादि सर्वत्र न गृह्णीयात् कथंचन।
यस्त्वागमः प्रमाणं स्यादपरिच्छिन्नदृक् प्रभोः॥565॥

विमर्शपरमार्थःस सर्वं पश्येदनाकुलः।
सर्वस्मिन् विषये सर्वप्रमातुः स समन्ततः॥566॥

गमयेदासमन्ताद्यत् प्रमाणमागमस्ततः।
यद्यप्यविकलेच्छेयं विचारपदवीं प्रभोः॥567॥

गन्तुं नार्हति भव्या गीस्तथाप्यनुग्रहात्मिका।
तदिच्छैव विचाराय सम्प्रेरयति साधकान्॥588॥

यस्य यादृग् विचारः स्याद् विमर्शात्मा दृढोऽदृढः।
प्रत्यभिज्ञा सुसूक्ष्माऽन्या तस्य बोधस्तु तन्निभः॥569॥

नौ वै सुखं शयानानामुद्धारं कुरुते शिवः।
आचार्यवान् श्रयेत् तस्माद् विमर्शकुशलां धियम्॥570॥

आन्तरः शब्दनात्मा यो विमर्शः सुदृढः प्रभोः।
प्रमुदितान्तरङ्गस्य चित्स्वभावस्य सम्मतः॥571॥

आगमो यद्यथाऽऽमृश्येत् तत्तथैवान्यथा नहि।
प्रत्यक्षादेरपि ह्येष जीवितं प्रोच्यते बुधैः॥572॥

ऐशस्य शब्दनस्यास्य प्रामाण्यं स्यादखण्डितम्।
आनुकूल्यं श्रितस्तस्य वेदादिरपि मानभूः॥573॥

प्रातिभं यद् भवेज्ज्ञानमुत्तमो ह्यागमस्तु सः।
वाक्याच्चिदात्मनः साक्षात्कारोऽपि तादृशो मतः॥574॥

प्रसिद्धिर्या निबद्धाऽऽस्ते शास्त्रेषु मध्यमस्तु सः।
पारम्पर्यश्रुता त्वेषा ह्यनिबद्धा तु मौखिकी॥575॥

अवर आगमः प्रोक्तश्चतुर्थस्त्वाप्तवाङ् मतः।
प्रसिद्धिर्वार्तिके प्रोक्त आगमो नहि तद्विदा॥576॥

'स एव चागमो नाम वृद्धव्यवहृतिक्रमः।'
चित्राधिकारिभेदेन प्रसिद्धेश्चित्रता मता॥577॥

'तदेक एवागमोऽयं चित्रश्चित्रेऽधिकारिणि।
तथैव सा प्रसिद्धिर्हि स्वयूथ्यपरयूथ्यगा॥578॥

व्याप्त्यादिकमजानानो नान्वयव्यतिरेक - दृक्।
बालो हि नानुमानेन प्रसिद्ध्यैव प्रवर्तते॥579॥

भुङ्क्ते बुभुक्षितस्त्वेषा प्रसिद्धिर्दृष्टसम्फला।
फलेनैव तु शास्त्रीया सैषा विश्वासमन्तरा॥580॥

शास्त्रं शब्दात्मकं सर्वं शब्दो हंसः प्रकीर्तितः।
'पूर्वपूर्वोपजीवित्वमार्गणे सा क्वचित् स्वयम्॥581॥

सर्वज्ञरूपे ह्येकस्मिन् निःशङ्कं भासते पुरा।'
'नरर्षि - देवद्रुहिण - विष्णुरुद्राद्युदीरितम्।582॥

उत्तरोत्तर - वैशिष्ट्यात् पूर्वपूर्वप्रबाधकम्।'
पर्यन्ततः शिवं ब्रूयात् गुरुमात्मानमीश्वरम्॥583॥

सर्वाध्वनो विनिष्क्रान्तं शैवानान्तु, परं पदम्।
अखण्डितप्रमाणानमधोऽभ्यागमनं कुतः॥584॥

श्रीतन्त्रालोकसद्ग्रन्थे नवमे दृढमाह्निके।
तत्त्वप्रकाशसन्नाम्नि महामाहेश्वरोऽब्रवीत्॥585॥

आगमप्राधिकारे च विमर्शिन्यां विशेषतः।
आरोपस्तत्त्वमाधृत्य यः परैः परिकल्पितः॥586॥

सद्युक्त्या तन्निराकुर्वन् व्यवस्थापयितुं सुधीः।
आचार्यवान् विमृश्याहमृजु तत्त्वं प्रकाशये॥587॥

व्यभिचारं विना त्वेकं रूपं यद् भुवनादिषु।
अनुगामि पृथिव्यादि तद्भावस्तत्त्वमुच्यते॥588॥

प्रकाशैकघनं स्वच्छं तत्त्वं सर्वसहं परम्।
स शिवः शक्तिभृद् भोक्ता महेश्वरपदाभिधः॥589।

स्फुरन् सर्वपदार्थात्मा लीलाभिनयपण्डितः।
प्रकाशमानता विश्ववेद्यानां यं विना न हि॥590॥

समाश्रितो महादेव्या स्थास्नुः सर्वगतः स्वराट्।
क्रोडीकरोति सद्विश्वं भ्राजते सर्वतो विराट्॥591॥

विश्वोत्तीर्णवपुः शम्भुः षट्त्रिंशत्-तत्त्वसम्भृतः।
स्फारोऽस्य यदिदं विश्वं भासते तत्त्वभृन्महः॥592॥

तनोति सर्वमित्येवं तद्भावस्तत्त्वसम्भृतः।
स्फारोऽस्य यदिदं विश्वं भासते तत्त्वभृन्महः॥593॥

तनोति सर्वमित्येवं तद्भावस्तत्त्वनाम तत्।
षट्त्रिंशं शिवमाख्याति यतो विश्वावभासनम्॥594॥

रूपस्वच्छो यथादर्शो बिम्बयेत् सर्वरूपकम्।
विश्वं प्रकाशयेत् सर्वं विश्वस्वच्छस्तथा शिवः॥595॥

यतश्च विश्ववेद्यस्य प्रकाशपरमार्थता।
तत् तत्त्वस्य पृथक्सत्ता ततोऽन्या सम्भवेत्कथम्॥596॥

अस्यां स्थितौ पृथिव्यादेर्विचार्यं लक्षणं कथम्।
जिज्ञासायाममुष्यान्तु प्रोक्तं श्रीगुरुणोत्तरम्॥597॥

शिवस्वातन्त्र्य-सामर्थ्याद् भायाच्छिवपदाद् भिदा।
पृथिवीत्वादि यद्रूपं तत् तत्त्वमनुगामि यत्॥598॥

यान्युक्तानि पुराण्यमूनि विविधैर्भेदैर्यदेष्वन्वितं
रूपं भाति परं प्रकाशनिबिडं देवः स एकः शिवः।
तत्स्वातन्त्र्यरसात् पुनः शिवपदाद् भेदे विभाते परं
यद्रूपं बहुधानुगामि तदिदं तत्त्वं विभोः शासने॥599॥

खण्डमुण्डादिगामित्वाद् गोत्वं सास्नादियोगतः
कालाग्निभुवनादौ तद् धरात्वं धृतियोगतः॥600॥

सांसिद्धिकद्रवत्वस्य योगाज्जलत्वमिष्यते।
भास्करत्वादियोगेन वह्नित्वादि नु तत्त्वकम्॥601॥

प्रमातृषु प्रमेयेषु द्विधा तत्त्वं विभाव्यते।
तनोति स्वककार्यादि व्याप्नोतीत्याह तत्त्वकम्॥602॥

शिवत्वं पुंस्त्वमाहोस्वित् प्रमातॄणां पृथग्गणे।
बहुधा स्याद् धरात्वादि विश्वत्र शिवभावके॥603॥

योऽनेकत्र तु पिण्डादौ तथात्वानुगमो भवेत्।
न तत्त्वस्थितिरिष्टास्ति देहेषु भुवनादिषु॥604॥

चेष्टादौ त्वथ भोगादौ देहादित्वं निवर्तते।
अहंकारस्य कार्येषु नेन्द्रियेष्वनुवर्तनम्॥605॥

आमहाप्रलयस्थायि - सर्वप्राण्युपभोगकृत्।
तत्त्वमित्युच्यते तज्ज्ञैर्न शरीरघटाद्यतः॥606॥

पार्थिवाणुसमूहस्य विप्रकीर्णस्य सर्वतः।
किं स्वरूपं स्वकं तत्र पृथिव्यास्तत्त्वसंज्ञकम्॥607॥

मृत्त्वमस्ति मृदस्तत्र येनासावुपदिश्यते।
तत्त्वेभ्योऽप्यणुसंघेभ्यो विशिष्टमविनाश्यथ॥608॥

तत्त्वानां कृतआक्षेपः समाधानमथापि तत्।
मतङ्गशास्त्रशैवोक्तिः प्रामाण्यमश्नुते हि यत्॥609॥

तत्त्वं यद्वस्तुरूपं स्यात् स्वधर्मप्रकटात्मकम्।
तत्त्वं वस्तुपदं व्यक्तं स्फुटमाम्नाय - दर्शनात्॥610॥

यदच्युतं स्वकाद् वृत्तात् ततं चात्मवशं जगत्।
ततमन्येन वा न स्यात् तत्तत्त्वं तत्त्वसन्ततौ॥611॥

सिद्धयोगीश्वरीतन्त्रं शतकोटिप्रविस्तरम्।
उपदिष्टं शिवेन प्राग् भेदत्रयविसर्पितम्॥612॥

संक्षेपणं कृतं तस्य प्रार्थितेन शिवेन तु।
मालिनीविजये तन्त्रे कोटित्रितयलक्षिते॥613॥

योगमार्गः पुरा प्रोक्तो द्वादशभिः सहस्रशः।
सुकुमारमतीनां तु हिताय प्रार्थितः पुनः॥614॥

शिवो देवीं प्रति प्राह मालिनीविजयोत्तरम्।
प्रसङ्गादुपदिष्टाऽत्र कार्यकारणभावता॥615॥

श्रीमानभिनवाचार्यः शिवेच्छापरिकल्पिताम्।
न्यरूपयदथो ह्येनां तत्त्वसन्दर्भसत्कृताम्॥616॥

तत्रैषां दर्श्यते दृष्टः सिद्धयोगीश्वरीमते।
कार्यकारणभावो यः शिवेच्छापरिकल्पितः॥617॥

कार्यकारणभावीये तत्त्वे त्वित्थं व्यवस्थिते।
श्रीपूर्वशास्त्रे कथितां वच्मः कारणकल्पनाम्॥618॥

वस्तुतः सर्वभावानां कर्तेशानः परः शिवः।
अस्वतन्त्रस्य कर्तृत्वं न हि जातूपपद्यते॥619॥

इच्छाकुम्भकृतो हेतुर्मृदा तु घटनिर्मितौ।
न चेतनः कुतश्चेच्छा बीजेनाङ्कुरनिर्मितौ॥620॥

जडस्य कारणत्वं यद् बीजस्याङ्कुरकं प्रति।
महिमेयांस्तु बीजस्य योजयेत् सत्तयाङ्कुरम्॥621॥

अङ्कुरो जायते यद्धि तत्र बीजस्य नाण्वपि।
बीजादन्यतया तस्यान्यथा कुम्भोऽपि सम्भवेत्॥622॥

अङ्कुरस्य महिम्नापि सत्तया नाङ्कुरो युतः।
तदानीमङ्कुरो नो सद् असच्चेत् तत्स्वभावकः॥623॥

आपद्येत स्वरूपेण विरुद्धं सत् कथं भवेत्।
नासद् वस्तु भवेत् किञ्चिद् यस्य स्यात्सद्विरोधिता॥624॥

अधिष्ठानत्वमिष्येत तस्य तूभयवस्तुनोः।
एषा व्यवहृतिर्नाम यत्राकार्यत्वमस्य तु॥625॥

वस्तुतोऽस्त्यङ्कुरो बीजे सतीत्येतावदेव हि।
सर्वं क्षणिकमास्था चेत् किं केन रुध्यतां कथम्॥626॥

सति बीजेऽङ्कुरः स्याच्चेत् सोऽयं स्यात् सर्वदैव सन्।
नो चेन्न कदाचित् स्यात् किञ्चिदेकतरं भवेत्॥627॥

सदा सत्त्वेऽन्यथात्वं नो ह्यकिञ्चिद्रूपतात्मकम्।
को वा स्यात् तेन योगार्थस्तथात्वेऽधिकता कथम्॥628॥

स्वरूपाधिक्यतस्तावद् नोदियात् पात्रताऽसतः।
बीजसापेक्षसत्ताभूरङ्कुरो भवतीति चेद्॥629॥

न चैतच्छक्यते वक्तुमन्यस्यान्यानपेक्षणात्।
शशविषाणतुल्यं हि नासद्वस्त्वस्ति किञ्चन॥630॥

अन्तःकरणभूमौ तु यदसद्वस्तु नो स्फुरेत्।
सत्स्वभावेन तस्यास्य विरोधो नावरुध्यते॥631॥

उत्पत्तेः पूर्वतः संश्लेज् जायमानस्तु योऽङ्कुरः।
तर्ह्यस्य किमु याच्यं स्याद्यद् बीजादेस्तु याचयेत्॥632॥

अथाभिव्यक्तिरिष्टा स्याद् नियतत्वमथापि वा।
विप्रतिपत्तिरत्रापि सदसत्त्वादिका पुनः॥633॥

नानुभयात्मकं तत् स्याद् नच तदुभयात्मकम्।
नवाऽनिर्वाच्यमेवापि विरुद्धत्वादिति ध्रुवम्॥634॥

सर्वथा लोकसिद्धा या कार्यकारणरूपता।
नोपपन्नेति सर्वोऽसावुत्सीदेद् व्यवहारकः॥635॥

कार्यकारणभावेति समाख्याबलतस्ततः।
युक्तिसंवलिता सैषा श्रेतव्या कर्तृकर्मता॥636॥

आभासनक्रियाक्षेत्रं कर्मैव त्वङ्कुरादिकम्।
भास्यते तेन कर्त्रा तत् समर्थाचरणेन यत्॥637॥

विश्राम्येत् कारणं कर्तर्येवेति निश्चयो विदाम्।
स्वेच्छावशादियद् विश्वं भासयेत् परमेश्वरः॥638॥

किन्तु मायापदे बीजादङ्कुरो भवतीति या।
नियन्त्रिता नियत्यैषा प्रतीतिर्लोकविश्रुता॥639॥

आन्तर - ग्राह्य - बाह्यत्वभेदादर्थस्त्रिधा स्फुरेत्।
प्रत्यभिज्ञाविदः प्राहुः प्रमातुर्मनसि स्थितेः॥640॥

प्रागेव संविदात्मैक्यात् स्फुरतोऽर्थस्य सुस्थितेः।
अन्वर्थाऽऽन्तरता सैषा स्फुरत्ता प्रथमा मता॥641॥

द्वितीया सा मनः प्राप्य याऽर्थस्य स्यात् प्रकाश्यता।
अन्तःकरणवेद्यस्य ग्राह्यता सुखवन्मता॥642॥

बाह्येन करणेनापि घटादेरिव वेद्यता।
जायते सा तृतीयोक्ता बाह्यता शास्त्रवेदिभिः॥643॥

तदेवं संविदि स्थायी बाह्यः सन्नवभासते।
मन्थानस्येच्छया त्वर्थो द्वेधा करणगोचरः॥644॥

स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम्।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते॥645॥

अन्तःस्फुरणशीलस्यार्थस्य करणवेद्यताम्।
शिव आभासयेदेतत् कार्यकारणतोच्यते॥646॥

शिव आभासयेदर्थमन्तः स्फुरणशालिनम्।
कार्यकारणता प्रोक्ता द्वेधा करणगोचरम्॥647॥

यदसत्तदसद्युक्ता नासतः सत्स्वभावता।
सतोऽपि न पुनः सत्तालाभेनार्थोऽथ चोच्यते॥648॥

कार्यकारणता लोके सान्तर्विपरिवर्तिनः।
उभयेन्द्रियवेद्यत्वं तस्य कस्यापि शक्तितः॥649॥

अपेक्ष्य कुम्भकारो यदचेतनमृदादिकम्।
घटादिं जनयेन्नासौ स्वेच्छामात्रेण जातुचित्॥650॥

तदिच्छां नानुरोध्येत ह्यचेतनमृदादिकम्।
पटसम्पादनेच्छां वा स्वैरं तन्नाद्रियेत किम्॥651॥

अतो मृदादिसंस्कार - मात्राधानकरो हि सः।
चिकीर्षितो घटादिस्तु चेतस्यस्य परिस्फुरेत्॥652॥

नैतावता घटादेस्तु कार्यस्य बहिरात्मता।
ततः परःशिवः स्वेच्छाधीन-नियतियन्त्रितम्॥
कुम्भकारं मृदादिं चापेक्ष्य निर्माति सद्घटम्॥653॥

मयेदं कृतमित्येवमभिमानेन योजयेत्।
जडदेहादिकेऽहन्ता - धारिणं सर्वकृन्महान्॥654॥

अस्वतन्त्रस्य कर्तृत्वं न हि जातूपपद्यते।
स्वतन्त्रता हि चिन्मात्रवपुषः परमेशितुः॥655॥

स्वतन्त्रं च जडं चेति तदन्योन्यं विरुध्यते।
जाड्यं प्रमातृतन्त्रत्वं स्वात्मसिद्धिमपि प्रति॥656॥

अर्थस्य बाह्यताभासाद् कार्यत्वं नैव भिद्यते।
अन्तराभासमानस्य तथा रूपापरिच्युतेः॥657॥

अर्थस्य बहिराभासः कार्यत्वमुच्यते त्विह।
आन्तरो यदपेक्षोऽर्थस्तदपेक्षो बहिर्भवेत्॥658॥

प्रमातरि न कर्तृत्वादन्या कारणता भवेत्।
न कर्तृत्वाद् ऋते चान्यत् कारणत्वं हि लभ्यते॥659॥

अथ भावस्वभावोऽयमस्मिन् सति भवेदिदम्।
स्वभावो जनकोऽर्थानामभूताकार - भावकः॥660॥

बौद्धैर्नैकस्य भावस्य कार्यकारणभावता।
स्थितयोर्यौगपद्येन स्याद्घटपटयोर्न सा॥661॥

क्रमेण जायमानं नो नीलज्ञानादनन्तरम्।
पीतज्ञानमनैयत्यात् कारणं कार्यमेव वा॥662॥

नियतक्रमिकत्वेऽपि कार्यं न पूर्वभावि यत्।
अत्र हेतुं न पश्यामः पश्चाद्भावि न कारणम्॥663॥

पूर्वभावस्य नैयत्ये कारणत्वमभीप्सितम्।
पश्चाद्भावित्वनैयत्ये कार्यत्वमिष्यते ततः॥664॥

बीजे सत्येव हेतौ यदङ्कुरोऽभूतपूर्वकः।
सति यस्मिन् भवेदेव ह्यन्यस्मिन्न भवेत् तु यत्॥665॥

यथाऽयं नियमः प्रेष्ठस्तथाऽन्योऽपि कथं न हि।
सति घटे तु धूमोऽपि न नैयत्येन कर्हिचित्॥666॥

कथं न ज्ञायते विद्वन्! नियमस्य तु जीवितम्।
प्रोक्तं परस्परापेक्षा जडानां सा न सम्भवेत्॥667॥

ते स्वात्ममात्रविश्रान्ताः प्रमात्रा सम्प्रकाशिताः।
अन्योन्यवार्तया शून्या नापेक्षां रक्षितुं क्षमाः॥668॥

अन्योन्यात्मकतां नाना धूमवह्नी अथोच्यते।
नियतौ परिदृश्येते लोकैरप्यन्यथा स्थितौ॥669॥

न ज्ञायते न चैवास्ति तादात्म्यं वह्निधूमयोः।
तथापि तौ भवेतां हि नियतौ जडरूपकौ॥670॥

नियमो नापरः कश्चित् पदार्थो यद्वशात् तयोः।
अन्योन्यात्मकतेष्येत भेदेन वर्तमानयोः॥671॥

सम्भवेत् सति कस्मिन् किं युक्तिन्तु नो लभामहे।
घटादिः सति बीजादौ जायेतेति वचो मृषा॥672॥

तदेवं नियमस्त्वग्नेस्तत्पश्चान्नास्त्यधूमता।
नानग्निता ततः पूर्वं धूमस्य नियमो मतः॥673॥

तदेवमनयोः स्वात्म-मात्रपर्यवसायिता।
अनन्यस्पर्शिता चेति विशिष्टं रूपमिष्यते॥674॥

कारणत्वं च कार्यत्वं नापेक्षार्थस्तु कश्चन।
यद्येवमुच्यते तर्हि त्यज्यतां नूनमाग्रहः॥675॥

नियमो यस्तु सम्प्रोक्तस्तेन दर्शनमात्रकम्।
प्रमाणीक्रियते, नान्यत् कार्यत्वं कारणत्वकम्॥676॥

अग्नेः पश्चात् तु नाधूमो धूम एव प्रतीयते।
धूमात् पूर्वन्तु नानग्निरग्निरेव प्रतीयते॥677॥

न च दृश्यानपेक्षात्तु न्याय्यं दर्शनमात्रकात्।
अर्थतत्त्वव्यवस्थानं शक्यं वक्तुं मनीषिणा॥678॥

ततःकश्चिद् विशेषो हि धूमाग्न्योस्तु स्वरूपगः।
नूनमभ्युपगन्तव्यो धूमाग्न्योर्यो नियामकः॥679॥

नाङ्गीकार्यो विशेषश्चेद् नियमस्वीकृतावपि।
अग्नेः पश्चात्तु नाधूमो वह्नेरतिशयः कथम्॥680॥

धूमात् पूर्वन्तु नानग्निर्धूमस्यातिशयः कथम्।
अपरस्य स्वरूपं हि परस्तु नातिशाययेत्॥681॥

बहुशो दैवयोगात्तु दृष्टे पटे घटादनु।
ज्ञातेयं नोदियात् तत्र पौर्वापर्यनियामकम्॥682॥

कृत्तिकारोहिणीनाम्नोरुदययोः कथं नहि।
विशेषेण विना कार्यकारणभावसम्भवः॥683॥

अथ पूर्वस्य सामर्थ्याद् भावो योऽन्यस्य जायते।
कार्यकारणभावःस्याद् धूमवह्न्योर्यथा स्थितः॥684॥

रोहिणीकृत्तिकानाम्नोर्नोदययोस्तु तादृशः।
पूर्वापरत्वतो नायमवसायोऽनयोर्यतः॥685॥

ध्रुवबद्धं हि नक्षत्रचक्रं सुप्रवहत् स्थितम्।
दृश्यते तु घटीयन्त्रवत् क्रमेण विवर्तितम्॥686॥

ततः स्वरूपसंविष्टो विशेषो नात्र कश्चन।
धूमाग्न्योरिव नात्रातः कार्यकारणभावता॥687॥

बौद्धैराक्षेप एषोऽत्र क्रियते युक्तिपूर्वकम्।
सामर्थ्यं यद्धि पूर्वस्य गीयते ह्यास्तिके नये॥688॥

सर्वं क्षणिकमित्यस्मात्
सिद्धान्तात् खण्ड्यते तु तत्।
बीजाभावादभूतोऽपि
जायते ह्यङ्कुरः परः॥689॥

बीजे सत्यङ्कुरस्तस्मिन् सति पत्रन्तु जायते।
इत्येष क्षणवादस्य सिद्धान्तः साधु गीयताम्॥690॥

धर्मालङ्कारकर्त्रा तत् प्रोक्तं सामर्थ्यसंज्ञकम्।
जनकत्वं कथं तस्मिन् यस्मिन्सति न जन्यते॥691॥

बीजनाशक्षणे चेत् स्याज्जननमङ्कुरस्य हि।
सामर्थ्यं तु तदा तिष्ठेद् बीजाभावे न बीजके॥692॥

तत्त्रैकाल्यपरीक्षाकृदाह प्रागसतो जनिम्।
अथ च प्रागसम्भावः कारणे सति दृश्यते॥693॥

विचार्यतां यदेतस्मिन् स्वीकृते कार्यकारणे।
कार्यकारणभावो यो धूमाग्न्योरुपयुज्यते॥694॥

आपद्येत तु सोऽन्यत्र कृत्तिकारोहिणी - स्थले।
निर्बन्धनो विभागो नो स्वीकर्तुं शक्यते यतः॥695॥

कार्यकारणयोस्तस्मात् स्वरूपे सम्प्रतिष्ठितम्।
ज्ञातव्यमभ्युपेयं यदन्वय - व्यतिरेकतः॥696॥

व्यवस्था तूपयुज्येत किन्त्वपेक्षां विना न तत्।
अपेक्षां द्विविधां प्राहुरेकान्योन्यानुषङ्गिता॥697॥

अभिप्रायस्वरूपाऽन्या मनीषिभिरुदाहृता।
उभयी नो जडानां सा कार्यकारणतात्मनाम्॥698॥

वह्न्यौष्ण्ययोस्तु सत्तायामैकात्म्यात् सानुषङ्गिता।
नोष्णत्वाभावमादृत्य वह्निसत्ताविभावनात्॥699॥

कार्यकारणभावे तु नैवेष्टैषा कथंचन।
परस्परन्नु वैविक्त्याद् धूमाग्न्योः प्रतिभासनात्॥700॥

तथात्वे त्वेककाभावे भायान्नैकतरं ध्रुवम्।
धूमाभावे न वै भायादग्निर्वापि विपर्ययः॥701॥

द्वितीया त्वनुसन्धानरूपापेक्षा प्रसिध्यति।
अन्नंप्रति च सापेक्षा भोक्तुरिष्टा ततस्त्विदम्॥702॥

यात्यभिमुखतामस्य संवित्तौ साधु तेन तु।
अभिलाषात्मसन्धानाद् भोक्ता चान्ने प्रवर्तते॥703॥

परस्परानुसन्धानसामर्थ्यविरहात् पुनः।
जडयोः सम्भवेदेषा कार्यकारणयोर्नहि॥704॥

ज्ञातेयं तु विना चैवं जडानां नोपपद्यते।
कार्यकारणभावो हि ज्ञेयमेतद् विशेषतः॥705॥

कारणस्य हि पूर्वत्वं कार्यस्य च परत्वकम्।
ज्ञातेयमेतदेव स्याज्जडयोः कार्यकारणे॥706॥

आविर्भावस्तु सत्तायाः परस्यापूर्वतां श्रितः।
प्रयोजकतया नूनं पूर्वसत्तामपेक्षते॥707॥

कार्यकारणयोरेतज्ज्ञातेयं प्रोच्यते बुधैः।
पौर्वापर्यकरूपन्तु नात्र दूषणसम्भवः॥708॥

पूर्वत्वं चापरत्वं च स्वभावादतिरिच्यते।
नवाऽतिरिच्यते प्रश्ने नाद्यः पक्षस्तु सम्भवेत्॥709॥

भवन्मते तु भेदेन न किञ्चिद् वस्तु सद्भवेत्।
पूर्वत्वादिकमेवापि यत् सत्तामाप्नुयात् स्वकाम्॥710॥

नान्यश्चानतिरेकत्वे भावद्वयन्तु शिष्यते।
विहायान्यो विशेषःकस्तस्य धूमाग्निरूपताम्॥711॥

अतोऽभ्युच्चयबुद्ध्या हि निर्ग्राह्यत्वमुदाहृतम्।
ततो न धूममात्रं वा बुद्धिमात्रमथापि वा॥712॥

कारणं चापि कार्यञ्च बौद्धैरत्रानुमोदितम्।
एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम्॥713॥

कोऽन्यो न भागो दृष्टः स्याद् यः प्रमाणैः परीक्ष्यते।
अग्नित्वं कारणत्वं चेज्ज्ञातेऽग्नित्वे तु किन्नहि॥714॥

कारणत्वं प्रतीयेत, बुद्धिनिर्ग्राह्यता भवेत्।
चारितार्थ्यन्तु तेनैव ह्यन्तराभ्युच्चयः कथम्॥715॥

विकल्पस्य तु दौरात्म्याद् ग्राह्यमग्नित्वमात्रकम्।
गौः शुक्लो डित्थ इत्येवमादौ नाभ्युच्चयत्वतः॥716॥

अभिन्नं भेदयेद्वापि संसृजेद् भिन्नमेव वा।
महिमासौ विकल्पस्य सत् प्रतिभासमूलकः॥717॥

किन्त्वेतत्तु विकल्पस्य माहात्म्यं प्रतिभासतः।
कार्यकारणभावे तु न प्रतिभाससम्भवः॥718॥

कारणत्वं च कार्यत्वं सन्निवेशादिवन्न यत्।
स्यादर्थातिशयस्तन्न प्रातिभासिकतानयोः॥719॥

प्रतीयमानरूपस्वभावत्वेन क्षणित्ववद्।
कार्यंच कारणं चैवावस्थाप्येते न्वथो इह॥720॥

अभ्युच्चयात्मिका बुद्धिस्तया कार्यन्तु नोचितम्।
नूनमत्रावधेयं , यदर्थे नाकारशून्यता॥721॥

नावेद्यं वेदनं यद्वत् तद्वन्निष्कर्ष इष्यते।
तदग्न्याकार एव स्याद् धूमकारणताऽऽकृतिः॥722॥

अभ्युच्चयस्तु यत्र स्यात् प्रतीत्यन्तरबोधकृत्।
एतद्वचोऽर्धसत्यं स्याद् वस्तुतस्तु विमृश्यताम्॥723॥

अग्न्याकाराद् भवेदन्या धूमकारणताऽऽकृतिः।
अन्त्यावस्थामनाप्तोऽग्निर्धूमं न जनयेत् कथम्॥724॥

अप्राप्तस्तादवस्थ्यन्तु नाग्निरनग्निरिष्यते।
अन्यत् प्रतीयमानाद्धि क्षणिकत्वं तु योगिनाम्॥725॥

नीलरूपादथो युक्त्या तद्यथा स्याद् विमृश्यताम्।
निवृत्तिश्चानिवृत्तिश्च साधारण्येन वर्तते॥726॥

नीलादौ, क्षणिकत्वन्तु निवृत्तिमात्रधर्मकम्।
प्रामाण्यं क्षणिकत्वं सा प्रोक्ता निवृत्तिधर्मता॥727॥

प्राप्यते त्वेष निष्कर्षो वह्नित्वं नाम तद्भवेत्।
कारणत्वात् पृथग्रूपं भास्वराद्यात्मिकाऽऽकृतिः॥728॥

धूमानुविहिता या स्यादन्वयव्यतिरेकिता।
वह्नित्वेन त्ववच्छिन्नं कारणत्वमुदाहृतम्॥729॥

धूमत्वं पाण्डुराद्याकारत्वं निरुच्यते किल।
अन्वयव्यतिरेकानुविधायित्वन्तु कार्यता॥730॥

वह्नेरपेक्षया धूमत्वतो भिन्ना मता ननु।
या धूमरूपता प्रोक्ता या वह्निरूपताऽथवा॥731॥

ततोऽतिरिक्तमेव स्यात् कार्यत्वं कारणत्वकम्।
प्राप्यते सद्विमर्शेन निष्कर्षो युक्तिमण्डितः॥732॥

अन्यथा हि विशीर्येत विशरारुसमं भवद्।
कार्यकारणभावेन सम्मतं भावकद्वयम्॥733॥

अस्यां स्थितौ वदेयुश्चेद् बौद्धदार्शनिका मुदा।
कार्यकारणभावात्मा सम्बन्धः सम्मतो न नः॥734॥

तत्प्रत्युत्तरदानाय शैवकाश्मीरका . जगुः।
बौद्धदार्शनिकानां यस्तर्क एष उदाहृतः॥735॥

पर्यवस्यन्ति भावास्तु समे स्वात्मनि निष्ठिताः।
अपेक्षाशून्यभावानां जडानां नैव सम्भवेत्॥736॥

कार्यकारणभावो यदुपपादितमित्यथो।
अङ्कुरो जायते बीजात् प्रतीतिर्लोकसम्मता॥737॥

चित्प्रमाता ततोऽवश्यं विश्रान्तिस्थानमिष्यताम्।
यत्र भावद्वयस्थित्या कार्यकारणदेशना॥738॥

नैकप्रमातृविश्रान्तिं विना संश्लेष इष्यते।
जडानां विशरारूणां भेदाभेदात्मकः किल॥739॥

तत्कर्तृकर्मभावात्मा कार्यकारणभावता।
शैवानामेष सिद्धान्तो व्यवहारोपपादकः॥740॥

जडस्य तु न सा शक्तिः सत्ता यदसतः सतः।
कर्तृकर्मत्वतत्त्वैव कार्यकारणता ततः॥741॥

युज्यते नु ततो बीजाज्जनयेदङ्कुरं यथा।
कृषीवलस्तथा वह्नेर्धूमं शृङ्गाच्छरं शिवः॥742॥

बीजमङ्कुर इत्यस्मिन् सतत्त्वे हेतुतद्वतोः।
घटः पटश्चेति भवेत् कार्यकारणता न किम्॥743॥

तद्बीजाङ्कुरयोर्भेदे सत्येकस्मिन् प्रमातरि।
विश्रान्त्या नहि संसिध्येत् कार्यकारणभावता॥744॥

साऽऽपद्येत पटेनापि किं घटस्यान्यथा नहि।
तद्बीजाङ्कुरयोर्नूनमैकात्म्यं समभीप्स्यताम्॥745॥

कारणं परिणामेन कार्यमित्युच्यते वरम्।
किन्तु विचार्यतां भावो निजता - परिनिष्ठितः॥746॥

चेद्, बीजन्तु भवेद् बीजं नेयादङ्कुररूपताम्।
यस्त्वतथास्वभावात्मा स्वभावात्मा कथं भवेत्॥747॥

कदाचित् केनचिद्दृष्टः स्याद् घटोऽपि पटः किल?
यद्युच्येत त्वियानेव स्वभावो बीजकस्य तु॥748॥

क्रमेणाङ्कुरणाद्यात्मवैचित्र्याच्चित्ररूपकः ।
सत्कार्यवादिसिद्धान्तमाहुरेनं महर्षयः॥749॥

यद्येवं तर्हि बीजन्तु विश्रान्तिं लभतां ध्रुवम्।
बीजत्वमात्रके तद्वदङ्कुरस्तत्त्व - मात्रके॥750॥

अङ्कुरादि हि बीजस्याबीजात्मान्त्यं नु सम्भवेत्।
बीजाद्यपि भवेदाद्यमङ्कुरस्य स्वरूपकम्॥751॥

अनङ्कुरात्मकं तद्वदाहाभिनवगुप्तवित्।
बीजमङ्कुरपत्रादितया परिणमेत चेत्॥752॥

अतत्स्वभाववपुषः स स्वभावो न युज्यते।
स तत्स्वभाव इति चेत् तर्हि बीजाङ्कुरा निजे॥753॥

तावत्येव न विश्रान्तौ तदन्यात्यन्तसम्भवात्।
सम्भवेद् वस्तु नैकं हि द्वयात्मकं कथंचन॥754॥

ततः केनचिदेकेन ह्यवश्यं भाव्यमेव हि।
यस्य बीजाङ्कुराद्यात्मवैचित्र्याकारता स्फुरेत्॥755॥

एकस्य वस्तुनो यस्य भेदेन चित्ररूपता।
इष्यते चेदिहाप्यास्ते स एव प्रश्न आकुलः॥756॥

बीजाबीजात्मकं भिन्नमाकृतिद्वयमाकुलम्।
परस्परविरुद्धन्नु सम्भवेत् कथमित्यहो॥757॥

लोहितोऽलोहितश्चापि न घटो युगपद्भवेत्।
क्रमेण स घटः किन्तु चित्राकारोऽपि सम्भवेत्॥758॥

सत्यकार्यवाद आस्था चेद् विज्ञायेत दृढं त्विदम्।
भावः क्रमेण भिन्नात्मा स्वभावेन स्वतः स्फुरेत्।।759।।

अजडं चित्रविज्ञानं युगपच्चित्र - रूपकम्।
जडोऽप्यलोहितो भाति क्रमेण लोहितो घटः।।760।।

ततश्च चित्राकारोऽसौ तावान् कश्चित् प्रसज्यते।
अस्तु चेन्न जडेऽन्योन्यविरुद्धाकार - सम्भवः।।761।।

क्रमेण चित्राकारोऽस्तु जडः किन्नु विरुध्यते।
गुप्तपादेन सम्प्रोक्त एतावान् पूर्वपक्षकः।।762।।

एक एव स आकारः क्रमचित्रो हि तत्त्वतः।
स्वस्वरूप - निमग्नं तद्-वैचित्र्यं सर्वमश्नुते।।763।।

क्रमो वा यौगपद्यं वा वस्तु नैवातिशाययेत्।
संविदि त्वेव भासेत क्रमताऽक्रमताऽथ वा।।764।।

वस्तुनो ह्यधिको रूपान्नाक्रमो भाति वा क्रमः।
न भिन्नाकारसम्भूतिर्वस्तुन्यभिमते क्रमे।।765।।

उपलम्भः क्रमेणास्तु ह्यक्रमेणापि वा पुनः।
व्यवहारयति त्वेष ताभ्यां भावस्वरूपकम्।।766।।

उपलब्धोपलभते संविन्मात्रस्वरूपकः।
क्रमतोऽक्रमतस्त्वर्थं नोपलम्भस्तु वस्तुतः।।767।।

क्रमोऽक्रमो वा भावस्य न स्वरूपाधिको भवेत्।
तथोपलम्भमात्रं तावुपलम्भश्च किं तथा।।768।।

उपलब्धापि विज्ञानस्वभावो योऽस्य सोऽपि हि।
क्रमोपलम्भरूपत्वात् क्रमेणोपलभेत चेत्।।769।।

तस्य तर्हि क्रमःकोऽसौ तदन्यानुपलम्भतः।
स्वभाव इति चेन्नासौ स्वरूपादधिको भवेत्॥770॥

अथ स्वभावभूतत्वात् स्वरूपानति - रिक्तता।
स्थिता, क्रमस्य सम्भात्येवाति-रिक्तायमानता॥771॥

स्वस्वातन्त्र्यात्ततो भानमदः काश्मीरका जगुः।
स्वरूपानधिकस्यापि क्रमस्य स्वस्वभावतः॥772॥

स्वातन्त्र्याद् भासनं स्याच्चेत् किमन्यद् ब्रूमहे वयम्।
इत्थं श्रीशिव एवैकः कर्तेति परिभाष्यते॥773॥

किन्नामास्य तु कर्तृत्वमिति चेदुच्यते शृणु।
विचित्रेण स्वरूपेण मातृमेयात्मनां स्वयम्॥774॥

अंशानां प्रथनं यत् तत्कर्तृत्वमतिरेकतः।
कर्तृत्वं चैतदेतस्य तथा मात्रावभासनम्॥775॥

ते ते सर्वे पदार्थास्तु स्वेच्छयैवावभासिताः।
कार्यकारणभावोपि तद्वद् देवेन शम्भुना॥776॥

तथावभासनं चास्ति कार्यकारणभावगम्।
जिज्ञासा क्रियते विद्भिर्बीजाङ्कुरादिवद् यतः॥777॥

घटपटादिके शम्भुकर्तृकर्म - विशेषता।
समानैवेति किं नास्ति कार्यकारणभावता॥778॥

घट - साहित्यमाभाति नो निरन्तरता पटे।
अव्यभिचरिता त्वास्ते ततः सा नियमोज्झिता॥779॥

विपर्ययेण सम्प्राप्तिरेनयोर्विदिता यतः।
अतो यन्नियमेनैव यस्मादाभात्यनन्तरम्॥780॥

तत्तस्य कारणं ब्रूमः सति रूपान्वयेऽधिके।
घटे मृत्स्यादुपादानकारणं दण्डकादि नो॥781॥

यदीयं यस्य यद्रूपं धर्मेण केनचिद् भवेत्।
अनुयायि तदेव स्यात् तस्योपादानकारणम्॥782॥

बौद्धदार्शनिका आहुरत्र स्वां सम्मतिं मुदा।
अनपेक्षानुवृत्तेश्च भेदेऽप्यर्थान्तराश्रये॥783॥

तस्योपादानहेतुत्वं मृदः कुण्डादिके यथा।
किन्तु धूमादिके बौद्धैः कार्यत्वमभ्यधायि यत्॥784॥

अनुपादानकं तत्तु ह्यनभिज्ञत्व - बोधकम्।
धूमस्य कारणं नास्तेऽग्निरुपादानकं यतः॥785॥

आर्द्रेन्धनादि तस्यैतज्जगुः शैवा विमर्शिनः।
रूपान्वयेन चेद् युक्तः पौर्वापर्य-नियन्त्रितः॥786॥

कार्यकारणभावो हि वास्तवः सम्भवेत् कथम्।
नियमश्च तथा - रूपभासनामात्रसारकः॥787॥

बीजादङ्कुर इत्येवं भासनं नहि सर्वदा।
योगीच्छानन्तरोद्भूततथाभूताङ्कुरो यतः॥788॥

योगिनो निरुपादानमिच्छामात्रेण कुर्वते।
अङ्कुरादिकमित्यत्र विवादो नैव कश्चन॥789॥

पौर्वापर्यमयस्तत्र नियमोऽप्यवभासते।
बीजादेवाङ्कुरस्तस्माद् नायमेकान्त इष्यते॥790॥

योगिनामपि मृद्बीजे विनैवेच्छावशेन यत्।
घटादि जायते तत्तत् स्थिरस्वार्थक्रियाकरम्॥791॥

स्वप्ने घटपटादीनां हेतुतद्वत्स्वभावता।
भासते नियमेनैव बाधाशून्येन तावति॥792॥

ततो यावति याद्रूप्यान्नियमो बाधवर्जितः।
भाति तावति ताद्रूप्याद् दृढहेतुफलात्मता॥793॥

तथाभूते च नियमे हेतुतद्वत्त्वकारिणि।
वस्तुतश्चिन्मयस्यैव हेतुता तद्धि सर्वगम्॥794॥

अतएव घटोद्भूतौ सामग्री हेतुरुच्यते।
सामग्री च समग्राणां यद्येकं नेष्यते वपुः॥
हेतुभेदान्न भेदः स्यात् फले तच्चासमञ्जसम्॥795॥

मृद्-दण्डचक्रकाद्या हि व्यस्ताः स्युर्यदि हेतवः।
कारणभेदमाधृत्य कार्यभेदानिवारणात्॥796॥

तदेवं घटनानात्वप्रसक्तिः स्याद् दुरुद्धरा।
एकप्रमातृविश्रान्तिमादायैषां वपुर्हि यत्॥797॥

सामग्रीशब्दवाच्यं तज्जनयेद् घटमेककम्।
तथा च तेषां हेतूनां संयोजन-वियोजने॥798॥

नियते शिव एवैकः स्वतन्त्रः कर्तृतामियात्।
कुम्भकारस्य या संविच्चक्रदण्डादियोजने॥799॥

शिवएव हि सा यस्मान्न भेदः संविदस्ततः।
कौम्भकारी तु संवित्तिरवच्छेदावभासनात्॥800॥

भिन्नकल्पा यदि क्षेप्या दण्डचक्रादिमध्यतः।
तस्मादेकैक – निर्माणे शिवो विश्वैकविग्रहः॥801॥

कर्तेति पुंसः कर्तृत्वाभिमानोऽपि विभोः कृतिः।
कार्यकारणभावस्तदाभासमात्र – तत्त्वकः॥802॥

एकस्यापि च कार्यस्य नानाकारणता मता।
आभासमात्रता ज्ञेया कार्यकारणभावता॥803॥

शिवः स्वतन्त्रदृग्रूपो विश्वरूपतया स्थितः।
शिवानुग्रहभाजां सत्-सिद्धान्तः परमो ह्ययम्॥804॥

स्वरूपमात्मनश्चाथ शक्तिः स्वातन्त्र्य-संज्ञिका।
इयमाव्रियते येन स मलः समुदाहृतः॥805॥

आगमेषु तिरोधानमुच्यतेऽसौ मनीषिभिः।
स्वात्मप्रच्छादनक्रीडालीलाभूःशिवगा त्वियम्॥806॥

तेन स्वरूपस्वातन्त्र्यमात्रं मल-विजृम्भितम्।
श्रीतन्त्रालोककृत्प्रोक्तं वार्तिके च समादृतम्॥807॥

स्वात्मप्रच्छादनक्रीडामात्रमेव मलं विदुः।
स्वतन्त्रो हि विभुःकिञ्चित् किन्न स्वात्मनि भासयेत्॥808॥

यत् संकुचत्स्वरूपं स्यादज्ञानसंज्ञकं मलम्।
एतत्प्रभावतः प्राणी संकुचच्छक्तिको भवेत्॥809॥

बोधात्मनो महेशस्य संकुचज्ज्ञानरूपकम्।
अज्ञानमुच्यते सद्भिः शास्त्रेषु त्वाणवं मलम्॥810॥

मालिनीविजये तन्त्रे सुस्पष्टोक्तिर्महेशितुः।
मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम्॥811॥

संसारिणमणुत्वं स्वस्वभावमभिमानयन्।
तत्रैव रमते प्राणी मलं त्यक्तुं न वाञ्छति॥812॥

पूर्णत्वस्य तिरोधानाज्जायते या ह्यपूर्णता।
तस्यास्तु पूर्णताहेतोर्यततेऽन्येन सन्ततम्॥813॥

स्पृहयालोरियं प्रोक्ता स्पृहात्मा लोलिका मलः।
अपूर्णम्मन्यतारूपः परिस्पन्दस्त्वसौ मतः॥814॥

अकारो मूलभूतोऽर्णो बीजभूमिरुदाहृतः।
आह श्रुतिरकारो वै सर्वा वागिति स्फुटम्॥815॥

अक्षराणामकारोऽस्मि गीतं गीतासु सुस्फुटम्।
सर्ववर्णात्मकश्चायमकारो ब्रह्मवाचकः॥816॥

निवृत्तिस्तु यदा सर्वं निष्पन्नं प्रणवं विभुः।
अकाराख्यं परंधाम ब्रह्मा स कमलासनः॥817॥

अमूला तत्क्रमज्ज्ञेया क्षान्ता सृष्टिरुदाहृता।
सर्वेषामेव मन्त्राणां विद्यानां च यशस्विनि॥818॥

इयं योनिः समाख्याता सर्वतन्त्रेषु सर्वदा॥819॥

अकारेण भवेद् व्यङ्ग्यं तत्त्वमनुत्तरं परम्।
सर्वतत्त्वावभासेऽयं स्वतन्त्रं मूलकारणम्॥820॥

परात्परतरं तत्त्वं सृष्टिसंहारकारणम्।
सर्वपदार्थ - जातेषु स्वप्रकाशतया स्थितम्॥821॥

चित्तत्त्वमनवच्छिन्नमनावृतमनाविलम् ।
कौलिको विधिरस्माद्धि प्रभवेत् स्थितिमाप्नुयात्॥822॥

कौलिकं यन्मयंभाति तदनुत्तर-सुन्दरम्।
लिङ्गत्रयसमुत्तीर्णं लिङ्गाधारतया स्थितम्॥823॥

उपास्तिव्यापृतेर्दूरात् सुदूरतरमास्थितम्।
नानुत्तरे त्वियं चर्चाऽतीतावस्थाद्वये चिति॥824॥

नैष शक्तिर्महादेवी न परत्राश्रितो यतः।
न चैष शक्तिमान् देवो न कस्याप्याश्रयो यतः॥825॥

नैष ध्येयो ध्यात्रभावान्नध्याता ध्येय-वर्जनात्।
न पूज्यः पूजकाभावात् पूज्याभावान्न पूजकः॥826॥

न मन्त्रो न च मन्त्र्योऽसौ न च मन्त्रयिता प्रभुः।
न दीक्षा दीक्षको वापि न दीक्षावान् महेश्वरः॥827॥

तदेतच्छिवशक्त्यात्म सामान्यं च विशेषकम्।
स्वतन्त्रं चिन्मयैश्वर्यशक्तिसारमनुत्तमम्॥828॥

न सन्नचासत् सदसन्नच तन्नोभयोज्झितम्।
दुर्विज्ञेया हि सावस्था किमप्येतदनुत्तरम्॥829॥

शक्त्येकघनमेकं यदवर्णद्योत्यमव्ययम्।
चिन्मयं हृदयं स्वच्छं सर्वश्रुतिमनोहरम्॥830॥

परभैरवसंविद्या परिपूर्णा समन्ततः।
अनपेक्षप्रथासारा न किञ्चिदधिकं यतः॥831॥

अनुत्तरं तद्धृदयं हृदये ग्रन्थिरूपता।
ग्रन्थिं षोडशधा ज्ञात्वा कुर्यात् कर्म यथासुखम्॥832॥

नोत्तरं विद्यते यत्र प्रश्नप्रतिवचोऽमृतम्।
सततोदितमित्याहुरनुत्तर पदाभिधम्॥833॥

उत्तरणं भवेदुत्तरोत्तरसंक्रमात्मकम्।
भेदवादिमते तद्धि न तु काश्मीरशैवके॥834॥

पूर्ण-शिवत्व-सद्व्यक्त्या ह्यनुत्तर-पदस्थितिः।
तरणक्रम ऊर्ध्वं यः सौषुम्नेऽध्वनि सोत्तरः॥835॥

स नास्ति यत्र तद्धाम प्रोच्यतेऽनुत्तरं किल।
उत्तरः प्रोच्यते बन्धः उत्तरन्ति जना यतः॥836॥

उत्तरः प्रोच्यते मोक्षो भावार्थकल्युटा युतः।
एवंविधोत्तराभावात्स्याच्छैवानामनुत्तरम् ॥837॥

उत्तरं शब्दनं प्रोक्तमीदृशं तादृशात्मकम्।
तद्भाति नैव यत्रैतदनुत्तरमतो ध्रुवम्॥838॥

इदमिति विकल्पात्म निर्विकल्पादनन्तरम्।
अनुत्तरं न चोदेति यत्र तदविकल्पितम्॥839॥

उत्तरस्य ह्युपायस्य नावकाशोऽस्ति लेशतः।
अनुत्तरं हि तत्त्वं तद् भावनाकरणोज्झितम्॥840॥

पञ्चाशद्भेदभिन्नस्य सोत्तरस्योत्तरस्य तु।
समावेशस्य भावो न यस्मिन् तत् स्यादनुत्तरम्॥841॥

अधरादुत्तरं ह्येतज्जागरात् स्वप्नकं महत्।
अधरोत्तरभावो न यस्मिन् स्यात्तदनुत्तरम्॥842॥

औत्तराधर्यसद्वैत - सम्मोहाधायि चोत्तरम्।
तद्भिन्नं सुन्दरं सत्यं शिवाद्वयमनुत्तरम्॥843॥

अधरोत्तरभावेन ब्राह्मणादिकसंग्रहात्।
यत्रोनाधिकभावो न तत्त्वं तत्स्यादनुत्तरम्॥844॥

पश्यन्त्याद्या अघोराद्या भवेयुर्न प्रभाविनः।
तत् तत्त्वं गुरवः प्राहुर्यदनुत्तरसंज्ञकम्॥845॥

नोदनं नुत् तया यः स्यात् तरणं तत्तरः स्मृतः।
स्वप्रकाशे यतोऽसौ नो तत् तत्त्वं स्यादनुत्तरम्॥846॥

अनिति श्वसितीत्यत् स्यात् प्रत्यये क्विपि साधनात्।
अननं जीवनं स्यादन् पुर्यष्टकं तु शून्यकम्॥847॥

परत्वं न परापेक्षं यस्मिन् तत्स्यादनुत्तरम्॥848॥

पूर्णाहम्भावरूपाया 'अ' रूपा स्यात् कला महः।
तस्या नुत्-प्रसरो ज्ञेया या विसर्गान्तता किल॥849॥

तस्यास्तरः प्लवो नूनं सा सर्वोपरिवृत्तिता।
यस्मिन्ननाविलं तिष्ठेत् तद्धामानुत्तरं महः॥850॥

नुत्प्रेरणा क्रमात्मा या सा यस्मिन्नास्ति सोऽस्त्यनुत्।
न्यायसम्मत आकाशस्तस्मात्सूक्ष्ममनुत्तरम्॥851॥

आत्मा वै ग्राहको माता जडसापेक्ष उत्तरः।
अनपह्नवनीयन्तु संविद्रूपमनुत्तरम्॥852॥

भैरवस्तु चिदानन्दः सर्वतः सम्प्रकाशते।
अविच्छिदात्मकः कुम्भस्तदधीनः प्रकाशते॥853॥

अयमित्यवभासो हि यो भावोऽवच्छिदात्मकः।
स एव घटवल्लोके संस्तथा नैष भैरवः॥854॥

सृष्ट्यादिपञ्चकृत्यानां कारिणी परमेश्वरी।
सा संवित् परमा देवी प्रोक्तः स परमः शिवः॥855॥

संवित् संवेद्यनिष्ठा स्यात् संवेद्यं नात्मनः पृथक्।
तस्मादव्यपदेश्यैषाऽनाख्या संविदनुत्तरा॥856॥

माता मानं च मेयं च भाति यस्या अनुग्रहात्।
सव्यापारा भवेत्संविद् गलनात्तु ह्यनामया॥857॥

वेद्यादिभेदगलनादुक्ता सेयमनामया।
मात्राद्यनुग्रहाधानात् सव्यापारेति कीर्त्यते॥858॥

शिवाश्रितं जगत् सर्वं न शिवः कश्चन श्रितः।
स्वशक्तौ भगवानास्ते तेन गीतस्त्वनाश्रितः॥859॥

तत्त्वं ह्यनावृतं यद्धि नाधीनं स्यात्तु कस्यचित्।
शिवतत्त्वमतः शून्यातिशून्यं स्यादनाश्रितम्॥860॥

उपास्यत्वेन भाव्यो हि शिवतत्त्वे ह्यधिष्ठितः।
अनाश्रितः शिवो ह्युक्तश्चिदैक्याख्यातिरुज्ज्वलः॥861॥

यस्या निरुपधिज्योतीरूपायाः शिवसंज्ञया।
व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे॥862॥

रहस्यात्मकतत्त्वस्य व्याख्यानं सुस्फुटं यतः।
न सम्भवेदतः प्रोक्ता ब्रह्मानिर्वचनीयता॥863॥

उच्यतां वा परब्रह्म परमः शिव इत्यथो।
न भेदः शब्दभेदात् स्यादर्थाभेदादभेदता॥864॥

मायाया वा अविद्याया नात्राऽनिर्वचनीयता।
वेदान्तिनोऽनुजानन्तु युक्तिशून्यामथापि ताम्।।865।।

ईश्वरप्रत्यभिज्ञाया विमर्शिन्यामतोऽब्रवीत्।
गुप्तपादो महायोगी सद्वा कार्यमसद् भवेत्।।866।।

नानुभयात्मकार्यं स्याद् उभयात्मकमेव वा।
अनिर्वाच्यमभीष्टं स्यात् स्ववाचैव विरोधनात्।।867।।

आगमेषु गुरोः स्थानं विद्यते सर्वतः परः।
हृदिस्थोऽपि शिवो भाति गुरुतामाप्य नान्यथा।।868।।

नित्यं निरावरणमप्रतिमस्वरूपं
शम्भुं स्वभावविमलं हृदि संस्फुरन्तम्।
पश्यन्ति नैव कृतिनः सुकृतैर्भवन्तं
यावद् भवान्न गुरुरूपतया विभाति।।869।।

पञ्चकृत्येषु चत्वारि वदेयुः शिवतां त्वयि।
सृष्टिः स्थितिरथो ध्वंसो निग्रहो देव! तुर्यकम्।।870।।

गुरुतामपि यत्प्राहुरनुग्रहपदाभिधम्।
शिवस्तोत्रात्ततः प्राहुर्गुरुस्तोत्रं महत्तरम्।।871।।

शक्तिपातं विना किन्तु न लभ्यः सद्गुरुर्महान्।
शक्तिपातवशादेव नीयते यद् गुरुम्प्रति।।872।।

न कर्मपरतन्त्रोऽयं नो वा मलसमाश्रयः।
ईशेच्छावशगं वृद्धाः शक्तिपातं विदुर्बुधाः।।873।।

कस्मिंश्चित् स्वेच्छया भाति चिद्रूपेण महेश्वरः।
तत्रास्य नाणुगे तावदपेक्ष्ये मलकर्मणी।।874।।

मायावशादणुत्वं चेद् माया नाश्या ह्यनुग्रहात्।
नैषा विना शिवं दिव्यं कारणं भवितुं क्षमा॥875॥

अणुस्वरूपताहानौ माया हेतुर्न तद्‌गता।
कृपा मायानपेक्षा तत् – सम्मताचार्यशास्त्रयोः॥876॥

ज्ञानात्मानुग्रहः कृत्यं पूर्णज्ञानं प्रकाशयेत्।
नापेक्षेत ततः कर्म नियतिं वा जडामसौ॥877॥

अनुग्रहो गुरोर्मूर्तिः स्वस्वरूपे विकस्वरे।
ज्ञप्त्यात्मेति कथं कर्मनियत्यादि प्रतीक्षताम्॥878॥

संकुचितस्वभावाणोर्नियतिः काल एव वा।
कार्यं प्रति भवेद्धेतुर्न तु संकोचनाशनम्॥879॥

कर्मकालनियत्यादि यतः संकोचजीवितम्।
संकोचहानिरूपेऽस्मिन् नैव हेतुरनुग्रहे॥880॥

अनुग्रहाख्यकृत्येऽथ शक्तिपाते महेशितुः।
कर्मकालनियत्यादि - रहितेच्छैव कारणम्॥881॥

बध्नाति काचिदपि शक्तिरनन्तशक्तेः।
क्षेत्रज्ञमप्रतिहता भवपाशजालैः
ज्ञानासिना च विनिकृत्त्य गुणानशेषान्-
अन्याकरोत्यभिमुखं पुरुषं विमुक्तौ॥882॥

मलमज्ञानसंज्ञं यद् इच्छा तस्य प्रयोजिका।
तेन स्वरूप - स्वातन्त्र्यमात्रं मल - विजृम्भितम्॥883॥

शिवस्य या तिरोधित्सा तन्मलं प्रोच्यते बुधैः।
या तु वेदान्तसिद्धान्तेऽनाद्यविद्या न सात्र तत्॥884॥

स्वात्मप्रच्छादनेच्छैव वस्तुभूतो मलःस्मृतः।
येनावृतः शिवः स्वस्मिन्नणुतामपि भासयेत्॥885॥

स्वात्मप्रच्छादनेच्छात्मा लीलोक्ता या महेशितुः।
आगमेषु तिरोधानशब्देन सोच्यते मलः॥886॥

स्वातन्त्र्येण स्वरूपस्य संकोचो मल उच्यते।
तज्ज्ञानं यदपूर्णं स्यात् तस्मादज्ञानमित्यपि॥887॥

अज्ञानमाणवं प्रोक्तं मलमागमचर्चितम्।
पूर्णत्वस्य तिरोधानादपूर्णत्वप्रतीतितः॥888॥

भिन्नेन वस्तुना जीवे पूरणाय स्पृहोदयः।
लोलिकैषा स्पृहारूपा ह्यभिलाषो मलो मतः॥889॥

आणवोऽयं मलः सूक्ष्मः कार्यतो ह्युपपद्यते।
अभिलाषस्ततः कार्यो भोगादौ स प्रवर्तकः॥890॥

अपूर्णम्मन्यताज्ञानमविद्याऽख्यातिरप्रथा ।
अभिलाषस्य नैष्कर्म्यं श्रीतन्त्रालोककृन्मतम्॥891॥

अणूनां लोलिका नाम निष्कर्मा याऽभिलाषिता।
अपूर्णम्मन्यताज्ञानं मलं सावच्छिदोज्झिता॥892॥

ईश्वरस्य च या स्वात्मतिरोधित्सा निमित्तताम्।
साभ्येति कर्ममलयोरतोऽनादिव्यस्थितिः॥893॥

मलोऽभिलाषश्चाज्ञानमविद्या लोलिकाऽप्रथा।
भवदोषोऽनुप्लवश्च ग्लानिः शोषो विमूढता॥894॥

अहम्ममात्मताताङ्को मायाशक्तिरथावृतिः।
दोषबीजं पशुत्वं च संसाराङ्कुरकारणम्।।895।।

इत्याद्यन्वर्थ - संज्ञाभिस्तत्र तत्रैष भण्यते।
तेन स्वरूपस्वातन्त्र्यमात्रं मल-विजृम्भितम्।।896।।

स्वात्मप्रच्छादनक्रीडामात्रमेव मलं विदुः।
स्वतन्त्रो हि विभुः किञ्चित् किन्न स्वात्मनि भासयेत्।।897।।

मलमज्ञानमेव स्यात् संसाराङ्कुरकारणम्।
कर्मणः सहकारित्वं प्राहुरागमवेदिनः।।898।।

इति स्वकार्यप्रसवे सहकारित्वमाश्रयन्।
सामर्थ्यव्यञ्जकत्वेन कर्मणः कारणं मलः।।899।।

मायालब्धजनिः कालः मायात उपरिस्थितः।
शिवस्वात्मतिरोधित्साजन्योऽनादिर्मलो मतः।।900।।

कालसंकल्पना मायाजन्या भवति यत् ततः।
समुत्तीर्णो मलोऽनादिर्न त्वस्य नित्यतेष्यते।।901।।

अनादिः परमेशोस्ति तिरोधित्साऽपि तादृशी।
तत्प्रसूतो मलोऽनादिर्नायं नित्यो विभाव्यताम्।।902।।

अपूर्णत्वाभिमानेन ह्यणुतात्मनि जायते।
अणुताधानकर्तृत्वादन्वर्थमाणवं मलम्।।903।।

अणुर्नाम स्फुटो भेदो ह्यणूनामयमाणवः।
अपूर्णम्मन्यतात्मैष मलो द्वैविध्यमश्नुते।।904।।

जडं देहादिकं येन सकले प्रलयाकले।
आत्मत्वेनाभिमन्येत तदाणवमिहोच्यते॥905॥

ज्ञानक्रिया स्वभावस्य पूर्णज्ञातृत्वमेव वा।
पूर्णविमृष्टता वाऽपि न परामृश्यते यदि॥906॥

तदाऽऽणवं मलं प्रोक्तं शक्तेः संकोचनादपि।
संकोचादाणवस्यास्ति विज्ञानाकलवृत्तिता॥907॥

अनात्मन्यात्मताज्ञानाद् आत्मन्यनात्मदर्शनात्।
पूर्णाहम्भावशून्यत्वाद् आणवं मलमुच्यते॥908॥

स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः॥909॥

बुध्यन्ते स्वात्मनोभावा वेद्यत्वेन यया भिदा।
सा माया मल इत्युक्तो मलं मायीयमित्यपि॥910॥

सत्याणवे मले स्वस्माद् वेद्यस्यासति यद् भिदा।
प्रथते भेददृष्ट्यात्मा तन्मायीयं स्मृतं मलम्॥911॥

सकलप्राणिषु स्पष्टं दृढ़ं विद्येश्वरेष्वपि।
प्रलयाकलमध्ये तदीषन्मात्रं समुल्लसेत्॥912॥

बोधानामपि कर्तृत्वजुषां कार्ममलक्षतौ।
भिन्नवेद्यजुषां मायामलो विद्येश्वराश्च ते॥913॥

मायाजन्यो न मायीयो मायाजं यन्मलत्रयम्।
मलस्यागमिकी संज्ञा मायीयो मल इष्यते॥914॥

मायाकार्यतया यत्तु जगन्मायीयमुच्यते।
मायीयमलमेतन्न शरीरभुवनादिकम्।।915।।

मायीयं मलमित्याहुराख्या यस्य तु मायया।
आगमिका मलं तत्तु न तु मायाकृतत्वतः।।916।।

मायाख्यं यन्मलं तस्य मायीयमिति संप्रथा।
मायया निर्मितं यत्तु जगत् तन्न मलं भवेत्।।917।।

आणवाच्चैव मायीयाद् मलाद् भिन्नं हि कार्मणम्।
कर्मणा पुण्यपापाख्यवासनया समुद्भवम्।।918।।

अबोधरूपकर्तुर्हि देहादेर्भिन्नवेद्यकम्।
प्रथते यत् ततो धर्माधर्मरूपं हि कार्मणम्।।919।।

स्थितिरेतस्य सुस्पष्टं सकलाख्ये प्रमातरि।
प्रलयाकल-संज्ञे तु दद्यात् कालान्तरे फलम्।।920।।

कारणं प्रोक्तमेतस्य मलमज्ञानमाणवम्।
परिमिता क्रिया शक्तिः पशौ कार्मं मलं सृजेत्।।921।।

जात्यायुर्भोगसंज्ञानां फलानां दायकं हि तत्।
असंसरणसोपान - पदबन्धोऽस्य निर्गमे।।922।।

ज्ञानेनाज्ञाननाशे तु कर्तृत्वं नश्यति ध्रुवम्।
ततो न वासनाशेषः संसृतिश्च निवर्तते।।923।।

कर्मफलं शुभमशुभं मिथ्याज्ञानेन संगमादेव।
विषमो हि सङ्गदोषस्तस्करयोगोऽप्यतस्करस्येव।।924।।

शुभाशुभमयं कर्म तत्फलं कार्ममुच्यते।
आवरणं शरीरन्तु स्थूलमागमवेदिभिः॥925॥

प्राकृतेषु प्रमेयात्म-सूक्ष्म-स्थूलानि यानि हि।
तन्मात्राणि च भूताख्य-तत्त्वानि कार्यवर्गकम्॥926॥

स्वच्छन्दे प्रत्यभिज्ञायां चैतदुक्तं विशेषतः।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च॥927॥

गन्धो रसश्च तन्मात्रे रूपतन्मात्रमेव च।
स्पर्शः शब्दश्च पञ्चैव तन्मात्राणीरितानि तु॥928॥

एतत्ते दशधा कार्यं कीर्तितं नामसंख्यया।
कार्यवर्गश्च दशधा स्थूलसूक्ष्मत्वभेदतः॥929॥

पूर्वभावी य आभासः परभावी च नैयतः।
कार्यकारणभावः स प्रोच्यते लक्षणानुगः॥930॥

अतो यन्नियमेनैव यस्मादाभात्यनन्तरम्।
तत् तस्य कारणं ब्रूमः सति रूपान्वयेऽधिके॥931॥

स्वरूपान्वयसद्भावे मिथः सतीति योज्यताम्।
कृत्तिका-रोहिणी-मध्ये कार्यकारणता न हि॥932॥

लोके नियत्यधीनः स्यात्कार्यकारणता मिथः।
किन्त्वाभासस्य चैतस्य चिद्रूप आश्रयो मतः॥933॥

कार्यकारणभावो हि जडयोस्तु चिदात्मनि॥
अवभासोपि वा तस्य संसिध्येदाश्रये स्थिते॥834॥

एकप्रमातृविश्रान्तिमन्तरेण न सम्भवेत्।
अत्यन्तविशरारूणां जडानां श्लेषकल्पना॥935॥

कार्यकारणभावो हि कल्पितो योऽस्ति लौकिकः।
परमेशेच्छयाऽसौ हि नियतिप्राणया चितः॥936॥

भावाभावात्मकं विश्वं परमार्थतया स्थितम्।
कार्यं कर्ता भवेदीशः स्थितैषा कर्मकर्तृता॥937॥

कार्यकारणभावो यः स कर्तृकर्मभावता।
नान्येत्युक्तं विमर्शेन सदागमविचक्षणैः॥938॥

शिवः कर्तृस्वभावो ऽयं षट्त्रिंशत्-तत्त्वसद्वपुः।
वपुषा तेन तेनैष स्वस्मिन् भेदेन भासयेत्॥939॥

एष चानन्तशक्तित्वादेवमाभासयत्यमून्।
भावानिच्छावशादेषा क्रिया निर्मातृतास्य सा॥940॥

शिवस्यान्तरहंरूपतया संविन्मयं जगत्।
स्थितं तदेव बाह्येनेदन्तया चेतसा स्फुरेत्॥941॥

अन्तः सतस्तदेवं हि बाह्यता-सम्प्रकाशनम्।
सतः पुनर्न सत्त्वं स्यादसतः सत्त्वकं कुतः॥942॥

यदसत् तदसद् युक्ता नासतः सत्स्वरूपता।
सतोऽपि न पुनः सत्तालाभेनार्थोऽथ चोच्यते॥943॥

कार्यकारणता लोके सान्तर्विपरिवर्तिनः।
उभयेन्द्रियवेद्यत्वं तस्य कस्यापि वस्तुतः॥944॥

निरुपादान – सम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥945॥

विचित्रता तु भेदाभेदमयी परिवर्तिता।
संस्फुरेद् विश्ववेद्यस्य स्थितस्य शिव - संविदि॥946॥

अन्तःकरण-संवेद्यमात्रं किञ्चित् सुखादिकम्।
घटादिकं पुनर्ग्राह्यं बाह्येन करणेन च॥947॥

कर्तृता कुम्भकारस्य लोके सम्प्रथते किल।
सान्तःकरण–संस्थित्याः प्राक् संविदि विवर्तते॥848॥

जागरे स्वप्नके चाथ योगिना सम्प्रकाशिते।
कार्यस्यैकस्य भिन्नानि कारणानि मतानि हि॥949॥

तद्वदलौकिकं कर्तृ भिन्नं भिन्नं निरूप्यते।
लौकिकं त्वथ शास्त्रीयं मतमत्र विभाव्यताम्॥950॥

लोके च गोमयात् कीटात् संकल्पात् स्वप्नतः स्मृतेः।
योगीच्छातो द्रव्यमन्त्रप्रभावादेश्च वृश्चिकः॥951॥

मायातोऽव्यक्तकलयोरिति रौरवसंग्रहे।
श्रीपूर्वे तु कलातत्त्वादव्यक्तमिति कथ्यते॥952॥

ततो यावति याद्रूप्यान्नियमो बाधवर्जितः।
भाति तावति ताद्रूप्याद् दृढहेतु-फलात्मता॥953॥

तथाभूते च नियमे हेतुतद्वत्त्वकारिणि।
वस्तुतश्चिन्मयस्यैव हेतुता तद्धि सर्वगम्॥954॥

तथा च तेषां हेतूनां संयोजनवियोजने।
नियते शिव एवैकः स्वतन्त्रः कर्तृतामियात्॥955॥

मलं हि जगदुत्पत्तौ स्वरूपं प्रावृणोति हिं।
उपादानं तु माया स्यात् कर्म स्यात् सहकारि तु॥956॥

मलश्चावरको माया भावोपादानकारणम्।
कर्म स्यात् सहकार्येव सुखदुःखोद्भवं प्रति॥957॥

आत्मानं स्वप्रकाशन्तु कथमावृणुयान्मलः।
यदुक्तं मलसाहित्य मलावृतत्वकं ननु॥958॥

आत्मनश्चाधिकार्यत्वान्मलः किञ्चित्करो न चेत्।
कथमावरणायैष शक्तो ननु च भोः किमु॥959॥

मलसद्भावमात्रं हि तस्यावरणमुच्यते।
मलेन सद्वितीयोऽणुरावृतः परिभाष्यते॥960॥

पूर्णताऽख्यातिरूपं हि मलमाणवमुच्यते।
वेद्यभेदप्रथा रूपं मायीयं संस्मृतं मलम्॥961॥

शुभाशुभात्मकं कर्म-वासना कार्मणं मलम्।
त्रिविधं चित्तिरोधानाल्लीयते प्रत्यभिज्ञया॥962॥

अल्पं संकुचितं ज्ञानमज्ञानं सम्प्रकीर्त्यते।
संसृतेः कारणं ह्येतज्ज्ञानाभावो न कारणम्॥963॥

अज्ञानमिति न ज्ञानाभावश्चातिप्रसङ्गतः।
स हि लोष्ठादिकेऽप्यस्ति न च तस्यास्ति संसृतिः॥964॥

अतो ज्ञेयस्य तत्त्वस्य सामस्त्येनाप्रथात्मकम्।
ज्ञानमेव तदज्ञानं शिवसूत्रेषु भाषितम्।।965।।

तदेतद् द्विविधं प्रोक्तं देहादौ यदनात्मनि।
आत्मत्वेनाभिमानित्वमनात्मत्वे न चात्मनि।।966।।

अज्ञानं भ्रान्तिसंज्ञं तद्-द्वयं ज्ञानेन नश्यति।
ततस्तु गुप्तपादेन सम्प्रोक्तं सुविचार्य तु।।967।।

यदनात्मन्यपि तद्रूपावभासनं तत्पुरा निराकृत्य।
आत्मन्यनात्मरूपां भ्रान्तिं विदलयति परमात्मा।।968।।

सिद्धान्ते पौरुषं बौद्धं द्वैविध्यं प्रोक्तमन्यथा।
स्वात्मावरणरूपं तत् पौरुषं मलमुच्यते।।968क।।

स्वस्वरूपे स्वशक्तौ वा पारिमित्यावभासनम्।
तत्र पुंसो यदज्ञानं मलाख्यं तज्जमप्यथ।।969।।

स्वपूर्णचित्क्रियारूप - शिवतावरणात्मकम्।
संकोचिदृक्क्रियारूपं तत्पशोरविकल्पकम्।।970।।

अनिश्चयस्वभावो वा विपरीतोऽथ निश्चयः।
अशुद्धकलनारूपं बौद्धमज्ञानमुच्यते।।971।।

बुद्धौ यतःस्थितं तस्माद् बौद्धमित्यभिधीयते।
अहमित्थमिदं वेद्मीत्येवमध्यवसायिनी।।972।।

षट्कञ्चुकाबिलाणूत्थ - प्रतिबिम्बनतो यदा।
धीर्जायते तदा बौद्धं ज्ञानमज्ञानशब्दितम्।।973।।

आणवं मलमज्ञानं मूलभूतं निगद्यते।
तदन्यज्ज्ञान - संकोचादिकं तदाश्रितं मतम्॥974॥

अपूर्णेऽथ जडे देहे या स्यादात्माभिमानिता।
तदज्ञानं नु बन्धः स्यादथाल्पशक्तिरात्मनि॥975॥

भेददर्शित्वमज्ञानमथ कर्तृत्वसंकुचा।
तदाश्रितस्तु संस्कारः सोऽप्यज्ञानं मलःस्मृतः॥976॥

स्वात्मरूपेऽपि संसारे याऽनात्मधीरुदेत्यहो।
तदज्ञानं मतं चाथो सङ्कुचन्ममताऽपि च॥977॥

द्वैत–प्रथा तदज्ञानं तुच्छत्वाद् मलमुच्यते।
अज्ञानेन मलेनापि बन्धने निपुणं धृतः॥978॥

पशुर्नित्यो ह्यमूर्तोऽज्ञो निर्गुणो निष्क्रियोऽप्रभुः।
व्यापी मायोदरान्तःस्थो भोगोपाय-विचिन्तकः॥978॥

स्वेच्छास्वरूपसंकोचाद् अणुत्वं प्राप्य वस्तुतः।
अणवो नाम नैवान्यत् प्रकाशात्मा महेश्वरः॥979क॥

चिदचिद्रूपताभासी पुद्गलः क्षेत्रवित्पशुः।
चिद्रूपत्वाच्च स व्यापी निर्गुणो निष्क्रियस्तथा॥980॥

अज्ञानं मूलभूतं यत् साऽविद्या प्राणिनां मता।
स्वात्नो जगतश्चापि ज्ञानं यद् वास्तवं नहि॥981॥

यन्न ख्याति विमर्शान्तं तदख्यातिर्निगद्यते।
अविद्याऽज्ञानमख्यातिः पर्यायत्वेन संस्थिताः॥982॥

अख्यात्युल्लासिकां शश्वद् मायामागमिका जगुः।
सैवाऽविद्यासमुत्थानादविद्येत्यभिधीयते ॥983॥

अनादिरूपमज्ञानं ब्रह्मणो भिन्नमागतम्।
कुतः कथं न जानीमो गृहीतं किमनेन हि?॥984॥

अविद्यात्मकमज्ञानं स्प्रष्टुं सद्ब्रह्म न ह्यलम्।
विद्याविद्यात्मनोर्नैव सहावस्थानसम्भवः॥985॥

वस्तुतो ब्रह्मणोऽन्यस्तु जीवो नास्ति स्पृशेत्तु यम्।
अविद्याऽज्ञानमेवाथो ह्यभावात्मा भवेद्यतः॥986॥

अभावाद्भावरूपस्य जगतः सम्भवः कुतः।
अविद्यायाश्च हेतुःको नाहेतु किञ्चनास्ति हि॥987॥

कथंचिज्जगतो हेतुरविद्याचेत् किमर्थकम्!
अभ्युपगम्यते ब्रह्म चैश्वर्याश्रयरूपकम्॥988॥

अविद्ययैव सृष्ट्यादेः सम्भवादिति तर्क्यताम्।
बौद्धानां वासनावादोऽविद्यावादोऽथ मायिनाम्॥989॥

नीरक्षीरविदां नैव सन्तोषाय प्रकल्पते।
शून्यवादाद् विदूरो न मायावादो निभाल्यताम्॥990॥

काश्मीरकास्ततः प्राहुर्जगत्सृष्ट्यादिकर्तृताम्।
ऋचः सूक्तमनुस्मृत्यौपनिषदीं क्रियामयीम्॥991॥

महेश्वरस्य कर्तृत्वं साक्षादेवेष्यते ततः।
प्रत्यभिज्ञानये श्रौतसिद्धान्तः परमादृतः॥992॥

दर्शनविषयाणान्तु प्रतिपादनपद्धतिः।
छलं वापि वितण्डा वा निग्रहस्थानमेव वा॥993॥

आश्रित्यैव समीक्ष्याःस्युस्तर्का वा युक्तयोऽथवा।
इत्यक्षचरणाः प्राहुः पद्धतिः पालिता नहि॥994॥

बौद्धानामपि सूक्ष्माणां तर्काणामीक्षणाविधौ।
षड्दर्शनेषु चावश्यं शैवेषु दक्षिणेष्वपि॥995॥

वैष्णवेषु च शास्त्रेषु केवलं त्ववहेलनम्।
स्वयं नैयायिकैश्चापि न तु काश्मीरकैः कृतम्॥996॥

श्रीसोमानन्दपादैस्तु बौद्धवादविचारणे।
कथिता गुणसन्दृब्धाःषट्पञ्चाशत्तु कारिकाः॥997॥

चार्वाकपक्षमाधृत्य सप्तत्रिंशत्तु कारिकाः।
विवरणे पराशास्त्रे गुरुणोक्तं ततस्त्विदम्॥998॥

स्वपक्षान् परपक्षांश्च निःशेषेण न वेद यः।
स्वयं स संशयाम्भोधौ निमज्जंस्तारयेत् कथम्॥999॥

जगतो मूलकर्ता तु शक्तिमान् श्रीमहेश्वरः।
स्वस्वभावादसौ कुर्यात् पञ्च कृत्यानि सर्वदा॥1000॥

स्वात्मन्येव जगच्चैतच्चिन्मयं सत् प्रकाशते।
अपरिच्छिन्नपूर्णाहम्रूपेणैव विमर्शितम्॥1001॥

निजलीलाविलासात्तु भासयेत् तदिदन्तया।
स्वस्माद् भिन्नतयाऽभिन्नं जगद् यदवभास्यते॥1002॥

जगतः सृष्टिरुक्ता या भेदमय्यवभासना।
नियत्या चालनं चास्य स्थापनं सुचिरं स्थितिः॥1003॥

उत्तरोत्तरतत्त्वानां काले काले विलापनम्।
पूर्वपूर्वेषु तत्त्वेषु संहारः प्रोच्यते बुधैः॥1004॥

जीवास्तु स्वात्मनो भिन्नाः स्थितिकृत्येस्य मध्यगाः।
सुचिरं जीवभावेन स्थाप्यन्ते लीलया किल॥1005॥

अधोऽधः पातनं तावत् तिर्यगादिषु योनिषु।
कदाचिद् दीक्षितानां चेज्जनयेच्चेतसि स्फुटम्॥1006॥

शास्त्रे योगेऽप्यनाश्वासं वर्जनं शिववर्त्मनः।
निग्रहं वा पिधानं वा तिरोधानं तदुच्यते॥1007॥

शास्त्रं प्रति गुरुं चापि जीवेषु रुचिवर्धनम्।
प्रवर्तनं च दीक्षायां भक्तौ च ज्ञानयोगयोः॥1008॥

स्वसाक्षात्कारदानं च स्यादनुग्रहकृत्यकम्।
कृत्येष्वेषु मितप्रायमधिकारं प्रयच्छति॥1009॥

महेश्वरो हि देवेषु सृष्टेषु बहुधा मुहुः।
आब्रह्मस्तम्बपर्यन्ता जीवाः कर्म शिवेच्छया॥1010॥

कुर्वन्तीति क्रियाकृत्स नित्यं क्रीडासमुत्सुकः।
एकोऽप्यनेकवद्भाति नर्तकः परमः शिवः॥1011॥

श्रीब्रह्मा परमाणूंस्तु कर्माकाशाद्यपेक्षकः।
निर्मातुं क्षितिमादत्ते न तथा परमः शिवः॥1012॥

नोपादानं निमित्तं नो सृष्ट्यादिपञ्चकर्मसु।
भिन्नमपेक्षते किंस्विदुमया स्वेच्छयावृतः॥1013।

स्वात्मनि स्वेच्छया शैवा अनन्ताः शक्तयः प्रभोः।
दर्पणे नगरस्येव विश्वस्याभासिकाः स्वयम्॥1014॥

शिवः स्वच्छेच्छया स्वस्मिन् शक्तीनां प्रतिबिम्बनात्।
विश्वमहन्तया पश्यन् विवर्तेत यथासुखम्॥1015॥

विश्वस्य चैष आभासः कल्पनाकलितो नहि।
स्वातन्त्र्योल्लाससलीलातो वलितो रसनिर्भरः॥1016॥

नटनोऽसौ स्वमात्मानं जीव-निकायतः स्फुरेत्।
जगद्रूपतया चापि निर्मातृतैतदेव हि॥1017॥

विनापि बिम्बं नायुक्तं जगतः प्रतिबिम्बनम्।
शक्तिः स्वभावभूतैव निमित्तं विश्वबिम्बने॥1018॥

दुःखैकबहुलां सृष्टिं कुरुते चेन्महेश्वरः।
सर्वज्ञकर्तृते तस्य सर्वैश्वर्यमपि प्रभोः॥1019॥

वृथैव स्वीक्रियन्ते हि कृपालोर्दुःखकारिणः॥1020॥

कश्चिद् धनी पुनःकश्चिन्निर्धनः ससुखः पुनः।
कश्चित्तु दुःखभागस्ति वैषम्यमापद्यतेऽथ भोः॥1021॥

नैर्घृण्यं चापि शम्भौ ते माहेश्वर! वृथैव धीः।
स्वयं महेश्वरो जीवरूपतां श्रयते यदि॥1022॥

कस्तत्रास्ति परःस्वो वा वैषम्यं स्यात् कथं प्रभौ।
सम्भवेन्नापि नैर्घृण्यं नाट्याभिनयकर्तरि॥1023॥

शिवो नैवोपकुरुते न चैवापकरोति सः।
उपकारापकारौ च कुर्वन्नेव विराजते॥1024॥

स कुर्वन् पञ्च कृत्यानि स्वभावे रमते सदा।
प्रश्नं स्वभावसन्दर्भे प्राज्ञः कः कुरुतां बुधः!॥1025॥

हेतुना केन तूष्णोऽग्निर्भास्करोऽर्थ प्रकाशकः।
पुरस्तात्ते भवेत् प्रश्नः स्वभावः शरणं भवेत्॥1026॥

गुरुणाऽभिनवेन श्रीतन्त्रालोके तृतीयके।
प्रश्ने कृत्यं कथं प्रोक्तमाप्तकामे महेश्वरे॥1027॥

अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद् घटादिवत्॥1028॥

विश्वपूर्णा चितिः स्वच्छा स्वभावात् पारमेश्वरी।
सदानन्दमयी दिव्या स्यन्दमाना विराजते॥1029॥

अहन्तया सदाभाति लसन्तीयमिदन्तया।
शक्तिस्वभाविने तस्मादुत्पलेन निवेदितम्॥1030॥

सदासृष्टिविनोदाय सदा स्थिति - सुखासिने।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः॥1031॥

जयः पराजयो वापि क्रीडायां किमु गण्यते?
सुखं वा यदि वा दुःखं रात्रिर्वा दिनमस्तु वा॥1032॥

मोहो येषां सुखे त्वास्ते तेषां दुःखं विना सुखम्।
कथन्नु परिचीयेत सन्ततं सुखमात्रके॥1033॥

दुःखस्पर्धि सुखं तत्तु न सुखं भवितुं क्षमम्।
सूत्रितं सर्वमेवास्ति दुःखमेव विवेकिनः।।1034।।

चिदानन्दमयः स्वात्मा सुखराशिः स्थितः स्वयम्।
कस्मात् सुखमपेक्षेत कोऽन्यो वा विद्यते स्वतः।।1035।।

यश्चिच्छक्तिमयः स्वात्मा सोच्यते परमः शिवः।
सदानन्दस्वभावोऽसौ स्पन्दते बहिरन्तरम्।।1036।।

स्पन्दशीलश्चिदानन्द ऊर्मिभिर्विलसत्यलम्।
ऊर्मिरेषा विबोधाब्धेरैश्वरीच्छा निगद्यते।।1037।।

सैषेच्छाग्रे सृजेदेव स्रष्टृत्वं विमृशन्त्यपि।
स्वान्तः सूक्ष्मतमं किञ्चित् सृजन्तीदन्तयाप्यहम्।।1038।।

प्रकाशेत न हीदन्ता त्वहन्ताच्छादनं विना।
सैषा शक्तेः परस्यास्तु ज्ञानशक्तिमयी स्थितिः।।1039।।

अनन्तरमिदन्ताया स्फुटता किलभासते।
अहन्ताऽस्फुटतां याति साभास इदमः स्फुटः।।1040।।

एषा क्रियामयी शक्तिः स्थितिः शक्तिमतः स्मृता।
ज्ञानशक्तिप्रधानत्वे सदाशिव इतीर्यते।।1041।।

क्रियाशक्तिप्रधानत्वे सेश्वरः परिभाष्यते।
इच्छा-शक्ति-प्रधानत्वे प्रभुः शक्तिरुदीर्यते।।1042।।

आनन्दस्य प्रधानत्वे स्पन्दते यः शिवो हि सः।
विश्वस्मादयमुत्तीर्णो विश्वोत्तीर्णपदाभिधः।।1043।।

परमः शिव इत्युक्तश् चिच्छक्तिः पारमार्थिकी।
विश्वोत्तीर्णे शिवे सर्वं जगदहन्तया स्फुरेत्॥1044॥

प्रकाशेत विमृश्येत सामरस्यमिदं ननु।
परतत्त्वस्य या तावदवस्थोत्तीर्णतामयी॥1045॥

प्राधान्यात् तद्विमर्शस्य शिवसंज्ञा प्रवर्तते।
विश्वं प्रत्युन्मुखत्वे तु याऽपरा स्थितिरुद्भवेत्॥1046॥

तत्प्राधान्यविवक्षायां शक्तिसंज्ञा प्रवर्धते।
न शिवाद् भिद्यते शक्तिर्न शिवः शक्तितस्तथा॥1047॥

एतयोः शिवशक्त्योस्तु न भेदोऽस्ति मनागपि।
शिवशक्तिमयं तत्त्वं परमशिवशब्दितम्॥1048॥

शक्तिपातस्य दीक्षाया माहात्म्यं परमं स्मृतम्।
सैद्धे दर्शनशास्त्रेऽस्मिन्नाभ्यां मुक्तिमवाप्नुयात्॥1049॥

शक्तिपातंशिवो यस्मिन् कुर्याद्मुक्त्युन्मुखो हिसः।
शक्तिपातस्त्रिधा प्रोक्तस्तीव्रो मध्योऽथ मन्दकः॥1050॥

प्रत्येकन्तु त्रिधा प्रोक्तं तीव्रं मध्यं च मन्दकम्।
शक्तिपातप्रकारस्तन्नवधा भेदमञ्चति॥1051॥

ये तीव्रशक्तिपातेन पूतास्तेऽत्रैव जन्मनि।
लभन्ते परमां भुक्तिं परेषामपि मोचकाः॥1052॥

ये मध्यशक्तिपातेन योजितास्तेऽत्र जन्मनि।
दिव्यभोगं तु भुक्त्वा तत्पश्चान्मुक्ता भवन्त्यपि॥1053॥

ये मन्दशक्तिपातेन योजितास्ते बुभुक्षवः।
ऊर्ध्वोर्ध्वं रोहमाणास्सद्भोगं चिराय भुञ्जते॥1054॥

बहूनां जन्मनामन्ते मुक्तिं विन्दन्ति शाश्वतीम्।
शक्तिपातस्य सामर्थ्याज्जीवः कल्याणमृच्छति॥1055॥

सद्यस्तु शिवतां केचित् सिद्धस्य दर्शनादपि।
भाषणात् स्पर्शनाद्वापि शिवतामपरे विदुः॥1056॥

सद्यः शिवत्वविज्ञानाद् देहपाताच्छिवं व्रजेत्।
योगिनीदीक्षया ज्ञानं प्रातिभं लेभिरेऽपरे॥1057॥

देशनात् प्रत्यभिज्ञां तु ज्ञानात्मदीक्षया परे।
गुरोरनुग्रहेणैव शिवता केषुचिद् भवेत्॥1058॥

शिष्याणान्तु क्रियादीक्षां मलदाहाय कुर्वते।
येषान्तु जीवनप्रान्तकाले बोधोदयो भवेत्॥1059॥

सामर्थ्यशालिनः प्राज्ञा यत्र क्वचन संस्थितम्।
शिष्यं क्रियाख्यदीक्षातः शिवत्वेनापि युञ्जते॥1060॥

कदाचिच्छक्तिपातं चेत् तिरोधानं कदाचन।
कदाचिन्निग्रहं मध्ये कुर्वन् विश्वेश्वरो जयेत्॥1061॥

निग्रहानुग्रहौ कुर्वन् देवो विश्वैकविग्रहः।
कथं कुर्यात् स्वभिन्नस्य निग्रहंवाप्यनुग्रहम्॥
प्रत्यभिज्ञातरूपोऽपि प्रारब्धफलभुग् व्रजेत्॥1062॥

योगी शिवत्वसम्भोगाद् व्यामुह्येन्नैव साधकः।
समावेशस्य चाभ्यासाज्जीवन्मुक्तस्तु कश्चन॥1063॥

लीलां सृष्ट्यादिकां दिव्यां कर्तुं सामर्थ्यमश्नुते।
प्रारब्धे तु परिक्षीणे स्थूलदेहस्य पातने॥1064॥

सूक्ष्मदेहं परित्यज्य शिवेनैक्यमवाप्नुयात्।
कश्चन क्वचन स्थित्या भोगान् भुक्त्वा समन्ततः॥1065॥

शिवेनैक्यमवाप्नोति कश्चित् प्रशासको भवन्।
मन्दमन्दाख्यशक्तेस्तु सम्पातात् साधकः सुधीः॥1066॥

योगभ्रष्टो भवन् योगं समभ्यस्य शिवीभवेत्।
आश्चर्यकरमत्यन्त - रुचिकृद् विधिजातकम्॥1067॥

प्रत्यभिज्ञाफलोपायमृषयः सम्प्रपेदिरे।
त्रिकाचारसमाख्यस्तूपायः श्रेष्ठो निगद्यते॥1068॥

त्रिकाचारप्रभेदात्मोपायाः सन्ति सहस्त्रशः।
वीक्ष्यैव सद् गुरुः पात्रमुपायन्तु प्रयोजयेत्॥1069॥

चित्तभेदान्मनुष्याणां शास्त्रभेदो वरानने।
व्याधिभेदाद् यथाभेदो भेषजानां महौजसाम्॥1070॥

यथैकं भेषजं ज्ञात्वा न सर्वत्र भिषज्यति।
तथैकं हेतुमालम्ब्य न सर्वत्र गुरुर्भवेत्॥1071॥

दीक्षा भक्तिः क्रियायोगो त्रिकस्य साधनाक्रमे।
बहूनि सन्ति चाङ्गानि योगस्तु साधनं महत्॥1072॥

योगः पतञ्जलिप्रोक्तः सिद्धान्ते चापि वीरके।
सुषुप्तिपददातारममुं काश्मीरका विदुः॥1073॥

समाधिर्यस्तु निर्बीजः सुषुप्तेरेव साधकः।
त्रिकाचारमतं योगं प्रशंसन्ति मनीषिणः॥1074॥

कौलिकीं साधनां केचित् त्वरिनं फलवाप्तये।
शाम्भवश्चैव शाक्तश्च ह्याणवः तृतीयकः॥1075॥

योगनाम्ना त्रयोऽप्येते प्रथन्ते सदुपायकाः।
उत्तमोत्तमयोगस्तु प्रोक्तोऽसौ निरुपायकः॥1076॥

स्वल्पोपायममुं प्राहुरनुपायं महाजनाः।
अल्पार्थकत्वमस्त्येव षड्विधार्थनञो यतः॥1077॥

सकृद्देशनया वाथ सिद्धादीनाञ्च दर्शनात्।
स्वयं विवेचनेनापि शिवतादात्म्यदर्शनात्॥1078॥

शाम्भवो द्विविधः प्रोक्तः प्रथमो मातृकाभिधः।
श्रीतन्त्रालोकसद्ग्रन्थे विस्तरेण निरूपितः॥1079॥

पराविवरणग्रन्थे द्वितीया स्यात्तु मालिनी।
अभेदभावको जीव - शिवयोस्त्रिक उच्यते॥1080॥

योगार्थकाद् युजिर्धातोर्निष्पन्नो योग इष्यताम्।
युज् धातोः समाध्यर्थान्निष्पन्नो योगदर्शने॥1081॥

त्रिकसम्मतयोगस्तु सर्वेषामुपयुज्यते।
पातञ्जलस्तु केषांचित् कष्टसाध्य ऋजुर्नहि॥1082॥

अन्तःकौलो बहिःशैवो लोकाचारे तु वैदिकः।
सारमादाय तिष्ठेत नारिकेलफलं यथा॥1083॥

प्राधीतास्ताश्च विद्या ऋषिमुनिगुरुभी रक्षिता याः प्रयत्नैः
प्राप्तं पीतञ्च पूर्णं गुरुमुखसुलभं ब्रह्मविद्यामृतं यत्।
किन्त्वेषा काऽपिरम्या समरसरसिका मोक्षयन्ती च भोगाञ्-
शक्तिः स्वीया स्वतन्त्रा विलसति हृदये श्रीशिवाप्रत्यभिज्ञा॥1084॥

यस्तु मायाप्रमाता स्याद् मूर्तिवैचित्र्यमाप्नुयात्।
क्रियावैचित्र्यमादाय तयोश्च क्रमरूपताम्॥1085।

कल्पयंश्च तदाश्रित्य स्वात्मानं देहरूपकम्।
अथ संसर्गिणं भावं कलयेद् देशकालतः॥1086॥

कल्पनाकलितो देशः कालो वा वस्तुसन्नहि।
न देशः परमार्थेन नच कालोऽस्ति कश्चन॥1087॥

मूर्तिवैचित्र्यमादाय क्रमो देशक्रमो भवेत्।
गृहाजिरबहिर्द्वार - नदीतीर्थफलादिकम्॥1088॥

उद्यानक्षेत्रसस्यादि तन्मूर्तीनां परस्परम्।
आकारभेदतो भानं रूपवैचित्र्यमद्भुतम्॥1089॥

तदाश्रित्य तु मायाप्रमाता ह्याभासमूर्तिषु।
आकार - भेदभिन्नासु देशक्रमन्तु कल्पयेत्॥1090॥

क्रियावैचित्र्यमादाय क्रमः कालक्रमो भवेत्।
अधिश्रयणमारभ्य ह्यवश्रयणसान्तकम् ॥1091॥

पाकक्रियाङ्गभूता या अवान्तरक्रिया मताः।
तासां वैचित्र्यमाश्रित्य प्रमाता कल्पयेत् किल॥1092॥

विततत्वं तथा चापि ह्यविततत्वमथापि वा।
तदनुक्षणकं वापि घटिकादिकमेव वा॥1093॥

प्रमाता कल्पयत्येवं कालक्रममनोहरम्।
गुरवः संविदि प्राहुर्देशकालौ तु कल्पितौ॥1094॥

कार्यकारणभावादौ भावानां कलनाक्रमात्।
अक्रमेण परिच्छित्तिश् चित्रज्ञानादिके पुनः॥1095॥

क्रमाक्रमकला कालः प्राणस्थोऽध्वा प्रकीर्तितः।
इदानीन्तनभावेऽस्मिन् कालोऽप्याकलनं मतम्॥1096॥

कलनं शुद्धविद्यादावध्वयोगाङ्ग - मूलकम्।
कालोऽयमपरः प्रोक्तोभावनं साधकाश्रितम्॥1097॥

कालो योगे प्रकारः स्याद् अध्वात्मा स्थानकल्पने।
स्फार एष क्रियाशक्तेः कालतत्त्वात् पृथङ्मतः॥1098॥

एष कालो हि देवस्य विश्वाभासनकारिणी।
क्रियाशक्तिः समस्तानां तत्त्वानां च परं वपुः॥1099॥

क्रियाशक्तेरभिव्यक्तिरैश्वरं तत्त्वमुच्यताम्।
काल ईश्वरतत्त्वं तच्छिवस्य वपुरुच्यते॥1100॥

कञ्चुकात्मा तु यः कालो मायाक्षेत्रे कृतास्पदः।
आसमस्मि भविष्यामि ह्यभिमानस्त्वनेन हि॥1101॥

परिमितप्रमातुर्या क्रिया तदङ्गभूतकः।
तेन स्वात्मनि संकल्प्यं कालतत्त्वमुदाहृतम्॥1102॥

क्रममासूत्रयन् कालो जृम्भमाणः प्रमातरि।
प्रमेये प्रसरन् भूयः क्रमवन्तं परामृशेत्॥1103॥

योऽहं कृशोऽभवं स्थूलो वर्ते स्थूलतरोऽपि भोः।
दे रूपं स्वमात्मानं मेये च सहचारिणि॥1104॥

परिस्पन्दस्तु यः सौरः क्रमभासस्तदाश्रितः।
लौकिकः काल इत्युक्तः शिवनिष्ठोऽपरो मतः॥1105॥

क्रमताभासशक्त्याख्यः काली तच्छक्तिनामभाक्।
कालोद्विधात्र विज्ञेयः सौरश्चाध्यात्मिकः प्रिये॥1106॥

क्रमाक्रमात्मा कालश्च परः संविदि वर्तते।
कालीनाम पराशक्तिः सैव देवस्य गीयते॥1107॥

अध्वनः कलनं यत् तत् क्रमाक्रमतया स्थितम्।
क्रमाक्रमौ च चित्रैककलना भावगोचरे॥1108॥

आभासः कस्यचित्तु स्यादनाभासस्तु कस्यचित्।
भासानां प्रचलन्नेष क्रमः काल उदीर्यते॥1109॥

कालः सूर्यादि-संचारस् तत्तत् पुष्पादिजन्म वा।
शीतोष्णे वाथ तल्लक्ष्यः क्रम एव स तत्त्वतः॥1110॥

इयत्तया य आभासाः सिद्धाः सुपरिनिष्ठिताः।
सूर्यादीनां च मल्लिकादीनां शीतोष्णकस्य च॥1111॥

अपरोक्षानुभूतौ श्रीशङ्कराचार्य आह यत्।
जिज्ञासा दार्शनिक्यः स्युश्चतस्त्रः प्रमुखा इह॥1112॥

कोऽहं कथमिदं जातं को वै कर्ताऽस्य विद्यते।
उपादानं किमस्यासीद् विचारः सोऽयमीदृशः॥1113॥

योगिभिर्भारतीयैस्तु योगाभ्यासेन चिन्तितम्।
अन्तःकरणभूमिं चोत्तीर्यापि स्वात्मसात्कृतम् ॥1114॥

सुषुप्तौ वा तुरीये वा प्रकाशमानमात्मनः।
जिज्ञासायाः समाधानं स्वभावश्चोपदेशितम्॥1115॥

शिष्येभ्य उपदिष्टं यत् तद्दर्शनमुदाहृदम्।
सौषुप्ते तु पदे किन्तु जगतो भानमेव नो॥1116॥

ततस्तैः करणैर्बाह्यैरान्तरैश्चापि नो मतम्।
योगेनैव परिज्ञातमात्मनो ज्ञानमेव च॥1117॥

स्वभावश्चापि संज्ञातो योगिभिः सम्प्रकाशितम्।
जाग्रति स्वप्नभूमौ च यादृशं जगदस्ति हि॥1118॥

तुलनात्मविचारेण बुद्ध्या तर्कबलेन च॥
स्वं मतं सुस्थिरीकृत्य चोपदिष्टं प्रचारितम्॥1119॥

ततो दर्शनसिद्धान्तास्त्वंशतो दर्शनाश्रिताः।
तादृशैर्योगिभिःप्रोक्ताभूयसांशेन कल्पिताः॥1120॥

सुषुप्तिमपि तूत्तीर्णैर्योगिभिस्तुर्यभूमिगैः।
तुर्यभूमौ जगद्बीजमपि साक्षात्कृतं यतः॥1121॥

तत्त्वं तज्जगतश्चापि वास्तवं स्यात् समाहितम्।
साक्षात्कारात्मकं यत् स्याद्दर्शनं तन्न वर्ण्यते॥1122॥

शब्देन त्विदमित्थं स्यादन्यथा नैव सम्भवेत्।
ततश्चारुन्धतीन्यायाद् शब्दिता उपदेशकाः॥1123॥

उपदेशैर्बलं प्राप्य साधकस्तत्त्वदर्शनम्।
साक्षाद्यत्समवाप्नोति सफलं ह्युपदेशनम्॥1124॥

तुर्यावस्थासु दृष्टं यद् दर्शनं सत्यमेव तत्।
किन्तु तत्रापि सोपानचतुष्टयं हि भासते॥1125॥

तस्माच्चतुष्टयं सत्यं सूक्ष्मं सूक्ष्मतरं तथा।
सूक्ष्मतमं विशुद्धं चेत्युत्तरोत्तरसम्भृतम्॥1126॥

तस्माच्चतुर्विधं प्रोक्तं भारतीयं हि दर्शनम्।
नासत्यसूक्तकं तावत् पुरुषसूक्तकं तथा॥1127॥

वागम्भृणीयसूक्तं च दृष्टमृषिमहत्तरैः।
ऋग्वेदे भासते सम्यग् दर्शनोद्भासकं महत्॥1128॥

उपनिषत्सु केचित्तु दृष्टा ये ऋषिसत्तमाः।
दर्शनस्य महान्तो हि गुरवस्ते महत्तमाः॥1129॥

यास्केन मुनिना प्रोक्तं यदृषिर्दर्शनादिति।
साक्षात्कृतास्तु धर्मा यैस्त ऋषयो बभूवुरु॥1130॥

एतेषान्तु सुसूक्ष्माणां विद्यानां दर्शनात्मनाम्।
उपदेशः पुरायोग्यशिष्येभ्यो दीयते स्म ह॥1131॥

ते च योगं समभ्यस्य साक्षाद्दर्शनवेदिनः।
प्राकुर्वंस्तु सुविद्यायाः पात्रेष्वेव प्रबोधनम्॥1132॥

अथ तैः सम्यगभ्यस्य साक्षात्कारो व्यधायि च।
अभ्यधाय्यलसेभ्यो नो विश्वासरहिताय नो॥1133॥

भगवानपि गीतासु प्रोक्तवान् सुस्फुटं वचः।
सिद्धेषु वेत्ति सौभाग्याद् बहुषु कश्चनैव तु॥1134॥

मनुष्याणां सहस्त्रेषु कश्चिद् यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥1135॥

उपनिषत्सु पश्यन्तु दर्शनस्य फलं मृदु।
अश्नुवानो रहस्यन्तु धीरः कश्चन वेत्ति हि॥1136॥

कश्चिद् धीरः प्रत्यगात्मानमैक्षदावृत्त-चक्षुरमृतत्वमश्नन्।
वाक्यं चैतत् सम्परिज्ञानबुद्धया शास्त्रज्ञवृद्धाः सुमतं वदन्ति॥1137॥

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि वहवो यं न विद्युः।
आश्चर्यो वक्ता कुशलोऽस्य लब्धाश्चर्यःश्रोता कुशलानुशिष्टः॥1138॥

चिराद् दर्शनविद्यैषा भारतीय-परम्पराम्।
समेधितवती सम्यक् श्रद्धया समुपासिता॥1139॥

साधकाः श्रीगुरुं प्राप्य शिष्यतां हृदि संदधुः।
अनुग्रहेण तस्यैव सम्पूज्यां गुरुतां ययुः॥1140॥

तदेवं साधका भूयः सिद्धिमाध्यात्मिकीं श्रिताः।
सिद्धविद्याभिधानेन चक्रुरस्या यशःश्रियम्॥1141॥

साक्षात्कारः सुषुप्तेस्तु कलौ बुद्धेन यः कृतः।
सोऽप्युपेक्षित इत्यस्माद्धेतोस्तर्कः समाश्रितः॥1142॥

दर्शनस्योपदेशास्तु बौद्धतर्कबलिं गताः।
अधरीकृत्य सुश्रद्धां तर्कबुद्धिं समाश्रिताः॥1143॥

पाश्चात्यदर्शन-स्थित्याः सामीप्यं संययुः शनैः।
जैनबौद्धप्रशाखासु वैदिकदर्शनेष्वपि॥1144॥

वैष्णवेषु च शैवेषु शाक्तेषु तर्कपद्धतिः।
स्वपक्षस्थापने लग्ना परपक्षस्य खण्डने॥1145॥

वेदागमविरुद्धेषु वेदागमप्रशंसिषु।
दाक्षिणात्येषु शैवेषु वैष्णवदर्शनेष्वपि॥1146॥

बुद्धिस्तरीयतर्कस्य प्राधान्यं समभूद्यतः।
साक्षात्कारः स्वरूपस्य स्वभावस्य विलोपितः॥1147॥

वेदागमानुगन्त्रीणि दर्शनान्यपि तद्युगे।
तर्केष्वेव विलग्नानि विना श्रद्धां च साधनम्॥1148॥

प्रवृद्धस्य तु बौद्धस्य धर्मस्य खण्डनाय हि।
शङ्कराचार्यवर्येण भूयस्तर्काः समाश्रिताः॥1149॥

श्रद्धां च साधनां चैव श्रद्धेयाः संश्रिताःसताम्।
दुस्तर्कखण्डनार्थन्तु सत्तर्कं समुपाश्रिताः॥1150॥

पक्षपातात्तु तर्कस्य शून्यवादतटं श्रितः।
विवर्तवादमूलस्य सिद्धान्तः संबभौ यतः॥1151॥

ततो वेदान्तविद्याया विजयोऽभूच्छुभावहः।
पराजयस्तु बौद्धानां दर्शनानां च तादृशाम्॥1152॥

लिङ्गैस्तु षड्विधैर्ब्रह्माद्वयतात्पर्यनिर्णयम्।
चक्रुः श्रीभगवत्पादा भामतीकारलालितम्॥1153॥

साधनापद्धतिः शैवी शाक्ता वाऽद्वयलालिता।
भाः प्रकाशो विमर्शोधीर्मतिश्च भामती किल॥1154॥

ये एते संस्मृते चोभे मठाधीशैस्तु विस्मृते।
विमृष्टो मूल्यवान्नैष श्रौतो यः साधनाविधिः॥1155॥

तर्काश्रयो विवर्तस्तु भारतीयान् जनान् वृथा।
जगन्मिथ्येति संदेशाद् राष्ट्र-धर्मे कृशान् व्यधात्॥1156॥

राष्ट्रिया भावना देशे शिथिलाऽनादृता ह्यभूत्।
अनधिकारिणे मोक्षप्रचारो विहितः सदा॥1157॥

धर्माचारोऽपि मिथ्या चेल् लुप्ता राष्ट्रियभावना।
विस्मृता राजनीतिश्चेद् हितं किं दर्शनेन नः?॥1158॥

सतत्त्वतोऽन्यथाप्रथा विवर्तो य उदाहृतः।
तदाश्रयेण मुक्तेस्तु प्रचारोऽनर्थकारकः॥1159॥

अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायां रताः॥1160॥

विद्यां चाविद्यां च यस्तद् वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥1161॥

बौद्धवादस्य नो तावद् हानिरेतावती नहि।
शैवैरागमिकैर्यद्धि भुक्तिमुक्ती उमे मते॥1162॥

उपाया भुक्तिमुक्त्योस्तु प्रोक्ता राष्ट्रकृते नहि।
अद्वैतवादिवेदान्तैर् बौद्धवादे निराकृते॥1163॥

प्रभावो न परित्यक्तः परिपन्थेरविस्मृतेः।
श्रद्धया साधनाभ्यासः कृतो न तर्कसंश्रयात्॥1164॥

साधनात्मा क्रियात्मा वाचारात्मा नेक्षितः सुहृत्।
शुष्कोऽहृद्यःक्रिया हीनो ज्ञानात्मा पक्ष आदृतः॥1165॥

निर्वीर्यं दर्शनं जातं कदाचित् केनचित् कृतम्।
उपदिष्टन्तु सिद्धेन मठाधीशैस्तिरस्कृतम्॥1166॥

स्वतन्त्रानन्दनाथस्य सिद्धस्य वचनामृतम्।
मातृकाचक्र–सद्ग्रन्थे प्रोक्तमपि न सत्कृतम्॥1167॥

ज्ञानस्य सिध्यति विना क्रियया न रूपं
तस्यास्तथैव न हि तेन विनोपलभ्यः।
तस्मात्तयोर्यमलतैव मतं हि सैद्धं
पूर्वापरत्वकलनं त्विह पूर्वपक्षः॥1168॥

न्यायवैशेषिकैर्भूयो योगिभिश्चाप्युपासकैः।
सवेद्यरूपसौषुप्तस्वात्मनो विहितस्तु यः॥1169॥

साक्षात्कारोऽपवर्गात्मा सरणिस्तस्य घोषिता।
साधकस्तत्त्वविज्ञानाद् मिथ्याज्ञानं विनाशयेत्॥1170॥

दोषाणान्तु ततो नाशः प्रवृत्तेस्तदनन्तरम्।
जन्मनाशात्तु दुःखस्य त्वपायो ह्यपवर्गदः॥1171॥

प्रवृत्तित्यागसद्भावाद् दुःखमुक्तिस्तु काम्यते।
क्रियावसानरूपा चिदपवर्ग उदाहृतः॥1172॥

निश्चेष्टं यद्धि चैतन्यमपवर्गस्तदेव हि।
जगतो नैव तत्र स्याद् भानं तत्र सुरूपयुक्॥1173॥

श्रुतिवाक्यानि चाश्रित्य तर्कयुक्त्यैव भाषितम्।
अतिकारुणिकश्चेशः परमाणोर्जगत् सृजेत्॥1174॥

सृष्टिकृद्बद्धजीवानां कर्मणां फलभोगदः।
नियत्या स जगद् रक्षेद् श्रान्तानां सुखदो हरेत्॥1175॥

कालान्तरे पुनः सृष्टिं जगतः स समाचरेत्।
परमाणव आयाताः कुत इति न चिन्तितम्॥1176॥

कथं कुतो वा जीवानां मिथ्याज्ञानं समागतम्।
परमाणून् निरंशांस्तु संयोगं जनयेत्कुतः॥1177॥

संयोगस्य कृते यस्तु दिग्विभागो ह्यपेक्षितः।
परमाणुकृते तस्य कथं कुर्यात् स सम्भवम्॥1178॥

संयोगो नैकदेशेन न द्रव्यं स्यान्महत्तरम्।
सेयं दर्शनविद्या तु ह्यंशतः कल्पनाश्रिता॥1179॥

तत्सापेक्षकृतां सूक्ष्मां सुषुप्तिन्तु समाश्रिताः।
योगिनो ह्यविदंस् तत्त्वं दर्शने सांख्ययोगयोः॥1180॥

कैवल्याख्यां स्थितिन्त्वते ह्यात्मनः सुस्वभावताम्।
श्रौतवाक्यं समाश्रित्य तर्कसाहाय्यमाप्य च॥1181॥

निर्लेपं शुद्धचैतन्यं पुष्करस्य पलाशवत्।
अनादिकालतः किन्तु प्रकृतेः परिणामिताम्॥1182॥

गता या बुद्धिरास्ते हि तयात्मा श्लिष्यति ध्रुवम्।
श्लेषादेव तया बुद्धिधर्माः दुःखसुखादयः॥1183॥

आत्मधर्माः प्रतीयन्ते ह्यविवेकवशादथो।
अनादिकालतः कर्मफलभोगाख्यपाशता॥1184॥

त्रिगुणा प्रकृतिः कर्मपाशबद्धजनेषु हि।
भोगानां सिद्धये चापि संसृतेर्मोक्षसिद्धये॥1185॥

भजते परिमाणं हि गुणवैषम्यतः स्फुटम्।
अन्तःकरणबाह्येन्द्रियाणितन्मात्रकाणि च॥1186॥

भूतानि क्रमशो भूयो जगद्रूपतया स्फुरेत्।
अविवेकहतानेषा यावद्बोधोदयं ग्रसेत्॥1187॥

व्यक्ताव्यक्तज्ञविज्ञानं लभते पुरुषो यदा।
योगाभ्यासेन चिन्मात्रमात्मानं पश्यति ध्रुवम्॥1188॥

भिन्नांश्चानुभवत्येष विकारान् प्रकृतेः पुनः।
विवेकं ह्यात्मसात् कुर्याद् बुद्धेरिदं न वै मम॥1189॥

विवेकात् तत्क्षणं मुक्ता आप्रारब्धक्षयं पुनः।
देहधारी श्वसन्नन्ते सूक्ष्मदेहं परित्यजेत्॥1190॥

प्रकृतौ विलयं याति केवलः परितिष्ठति।
आकाशवत्तु निश्चेष्टः सुषुप्त इव तिष्ठति॥1191॥

दुःखत्रयाद् विनिर्मुक्तो मुक्तः कैवल्यभाग् भवेत्।
योगेन केवलत्वन्तु दृष्टमन्यत्तु कल्पितम्॥1192॥

प्रकृतेः परिणामादिसिद्धान्तः श्रुतिवाक्यतः।
कल्पनायास्तु साचिव्यं गृहीत्वा सुस्थिरीकृतः॥1192क॥

सांख्यशास्त्रस्य या दृष्टिः सूक्ष्मा न्यायाद्यपेक्षया।
हेतुमान् परमाणुस्तु हेतुस्तन्मात्रमेव तु॥1193॥

तन्मात्राणान्तु बीजं स्यादहंकारः सुतत्त्वकम्।
मूलं तस्य महत्-तत्त्वं तन्मूलं स्यात् प्रधानकम्॥1194॥

तदेवं सूक्ष्मदर्शित्वं स्थितं श्रीसांख्यदर्शने।
कैवल्यस्य दशा किन्तु सुषुप्तिरेव सम्मता॥1195॥

सौषुप्तं ज्ञानमेवास्ति सांख्यानां ज्ञानमुत्तमम्।
जीवचैतन्यवर्तित्वाद् नैतत्तुर्यदशोचितम्॥1196॥

न तत्र निजमैश्वर्यं किञ्चिज्ज्ञातं भवेदिह।
प्रकृतिस्तु स्वभावाद्धि भजते परिणामताम्॥1197॥

न तत्र प्रेरकः कश्चिदिष्यते सांख्यवित्तमैः।
इष्यते न्याय ईशस्तु सांख्यशास्त्रमनीश्वरम्॥1198॥

इयदेवेश्वरत्वं तु योगदर्शन - सम्मतम्।
सदामुक्तस्त्वसावादिसिद्धो ह्यादिगुरुर्मतः॥1199॥

सन् पुरुषविशेषोऽयं न जन्मादेस्तु कारणम्।
जगतः कारणं नैव प्रधानस्यापि कारणम्॥1200॥

नान्विष्टं पुरुषे तावदविवेकः कथं गतः।
स्वाभाविकन्तु ताटस्थ्यं पुरुषस्यापसार्यते॥1201॥

भायात्कथन्नु सौषुप्ते कैवल्यं कथमाप्यते।
तुर्यावस्थो नीतन्नो तत्त्वज्ञानं तयोर्नहि॥1202॥

आभ्यां सूक्ष्मतरं ज्ञानं विज्ञानवादिनां मतम्।
अनात्मत्वन्तु येषां स्याद्बौद्धानां शून्यवादिनाम्॥1203॥

तर्कबुद्धेस्तु योगस्याभ्यासाच्चिन्वन्ति शून्यताम्।
विकल्पबुद्ध्या जीवानामस्तित्वं भाति नान्यथा॥1204॥

स्वप्नसंसारवत् तेषामाभासो भवतीह नु।
विज्ञानं वास्तवं वस्तु नवता तु क्षणे क्षणे॥1205॥

नद्याः प्रवाहवद् दीपशिखापरम्परात्विव।
विज्ञानमेतदाभाति प्रवहति प्रकाशते॥1206॥

जलधारासु पूर्वाभ्यः स्नेहस्यन्दन - वेगिताः।
दीपज्योतिः - प्रभास्वेवं प्रकाशादि - प्रवेशना॥1207॥

विज्ञान - क्षणतस्तद्वदुत्तरक्षण - वर्तिनः।
संस्कारा वासनाश्चापि संक्रमन्ते निरर्गलाः॥1208॥

परिणामास्तु जायन्ते विज्ञानद्विप्रकारकाः।
सततमहमाकारा तासामालय-संज्ञिका॥1209॥

अन्यत् प्रवृत्तिविज्ञानं विश्वंभाति निरन्तरम्।
विद्यमाना न भावास्तु स्वप्नेभान्ति निरर्गलाः॥1210॥

विज्ञानस्य तु संस्कारकारणाद् वस्तुतोऽप्यसत्।
योगाभ्यासेन विज्ञानगतान् शिथिलयेद् यतः॥1211॥

संस्कारान्न प्ररोहः स्यान्न प्रवृत्तिस्ततो मता।
संस्कारस्य तु शैथिल्यमभ्यासवशतो भवेत्॥1212॥

देहत्यागक्षणे नाशाच्छुद्धविज्ञानशेषता।
चरमं फलमेतद्धि स्थितिरेषा विजृम्भते॥1213॥

नैतत्तोषाय केषांचिद् बौद्धानां विषयावभाः।
विज्ञानत्वं समुच्छिन्ने विषये सम्भवेत् किमु॥1214॥

तत्तत्त्वं शून्यमास्थेयं त्रिपुटीशून्यतामयम्।
प्रवृत्तेरालयस्यापि धारा वैज्ञानिकी क्षयम्॥1215॥

यायाद् दीपशिखावत्सा निर्वाणं शून्यमुच्यते।
शङ्कराचार्यपादैस्तु खण्डिता बौद्धसम्मता॥1216॥

प्रपञ्चसारसद्ग्रन्थे सौन्दर्यलहरीष्वपि।
तत्त्वं सारतया प्रोक्तं विरलैरेव गम्यते॥1217॥

ब्रह्मसूत्रादिभाष्येषु तत्त्वस्यावरता मता।
द्विप्रवाहा समुद्दिष्टा सुभगोदयसत्स्तुतौ॥1218॥

माण्डूक्यकारिकायां च गौडपादकृता पुनः।
अनुयायिन एतेषां तर्क–पक्षप्रसारिणः॥1219॥

प्रच्छन्न - बौद्ध इत्युक्त्या शून्यवादाविदूरिणः।
सम्बोध्यन्ते हि तत्त्वज्ञैर्न सम्मानजुषस्तु ते॥1220॥

अनादितत्त्वमज्ञानं प्रातिभासिकमुच्यते।
जीवो न ब्रह्मणो भिन्नो ब्रह्मैव परमार्थ-सत्॥1221॥

स्वातन्त्र्यशक्ति-संयुक्त एको यः परमः शिवः।
सदाशिवादि पृथ्व्यन्तविभक्तान्यतया स्फुरेत्॥1222॥

वटबीजं यथैकं सच्छक्तिमद् विविधं स्फुरेत्।
पत्रशाखादिभेदेन विभक्तान्यतया स्थितम्॥1223॥

ननु सदाशिवः पृथ्वीत्येवं नानाप्रभेदता।
चेत्तदा द्वैतभावः स्यादद्वैतस्य प्रबाधनात्॥1224॥

सत्यं, बीजाद् विना पत्रशाखादि यदि सत्यताम्।
व्रजेत् तदा स्फुटं द्वैतं न चेदद्वैतमेव सत्॥1225॥

विश्वोत्तीर्णः शिवो यस्मात् स्वातन्त्र्येणावभासयेत्।
स्वरूपादच्युतो नैव पृथिव्यादि स्वभिन्न-सत्॥1226॥

तस्माद् विभक्तमन्यद् वा भासितं यदसत्यकम्।
विश्वोत्तीर्णे शिवो स्वस्मिन् तेनाद्वैतं न खण्डितम्॥1227॥

परभृतमदोल्लासविलासादेस्त एव हि।
कालइत्युच्यतां यस्माद् गमनपठनादिकम्॥1228॥

अपरिनिष्ठितं तैर्यदियत्तां कलयेन्ननु।
अत्रोदाहरणं प्रोक्तं कनकं परिवर्तकैः॥1229॥

स्वभावः कश्चन ज्ञेयः सूर्यादीनां क्रमो ध्रुवः।
क्रम एव भवेत् कालो नान्यद् वस्तुस्वरूपकम्॥1230॥

श्रेष्ठा प्रेष्ठा च या विद्या विद्यानामुत्तमा स्मृता।
जयेदध्यात्मविद्या सा नानाशाखि-विजृम्भिता॥1231॥

सांख्ये न्याये च बौद्धे च वेदान्ते प्रतिपाद्यते।
कस्मिन् वस्तुनि मानं किं जिज्ञासाशान्तिकारकम्॥1232॥

तदा द्रष्टुःस्वरूपेऽवस्थानं-सूत्रं समादिशेत्।
मायाण्डव्यापिजीवस्य स्वरूपं योगसम्मतम्॥1233॥

पूर्णप्रमातृचैतन्यं काश्मीरं शैवदर्शनम्।
व्यञ्जयत्यनुभूयैतत् संविदद्वैतबोधकृत्॥1234॥

विश्वोत्तीर्णस्वरूपैषाऽध्यास्ते विश्वमयी पुनः।
नित्यानन्दमयी दिव्या पञ्चकृत्य-विधायिनी॥1235॥

सर्वंसहा ह्यभेदेन भेदाभेदतयाऽपि च।
भेदेन प्रथमानैषा सर्वं विश्वं प्रकाशयेत्॥1236॥

प्रकाशो हि विमर्शात्मा सामरस्यं यदेनयोः।
प्रोच्यते संविदेतद्धि सर्वशास्त्रनमस्कृता॥1237॥

संविन्महेश्वरो भाति ह्यद्वितीयः समात्मना।
लीलाक्रीडार्थकं बन्धं मोक्षं स्वीकुरुते स्वयम्॥1238॥

स्वर्गोऽथ नरको वाऽस्तु धर्मोऽधर्मोऽपि वा पुनः।
दिनं वा रजनी वाऽपि जडश्चेतन एव वा॥1239॥

पुण्यं भवतु वा पापं प्रकाशस्तम एव वा।
तिष्ठत्येका तु संवित्तिः परस्पर-विरुद्धयोः॥1240॥

सर्वैश्वर्यमयः स्वच्छश् चिद्घनः परमेश्वरः।
विमर्शात्मा स्वतन्त्रश्च स्वप्रकाशश्च शक्तिमान्॥1241॥

प्रकाशरूपता चास्य ज्ञानशक्तिर्निगद्यते।
विमर्शरूपता त्वस्य क्रियाशक्तिः प्रकथ्यते॥1242॥

जानामीति प्रतीतिस्तु ब्रूते ज्ञाने क्रियात्मताम्।
ज्ञानात्मता प्रकाशस्य प्रोच्यते शिवता यदि॥1243॥

क्रियात्मता तु सम्प्रोक्ता शक्तिता विद्भिरादृता।
शक्तिः समुच्छलन्ती स्यात् शान्तस्तु भगवान् शिवः॥1244॥

सते शक्तिर्भवन्ती स्याद् भवते तु सती मता।
नमः शिवाय शान्ताय शिवायै च नमो नमः॥1245॥

संवित्तिश्चिन्मयी स्वच्छा ह्यानन्दं विजहाति नो।
चिदानन्दघनस्तस्मात् प्रोच्यते भगवाञ् शिवः॥1246॥

स्पन्दो भागवतः प्रोक्त उच्छलत्ता चमत्कृतिः।
सामान्यश्च विशेषश्च स्पन्दः संविदि राजते॥1247॥

आगमप्रोक्तयोगस्यानुष्ठानात् साधको ध्रुवम्।
परिस्फुरन्तमप्यन्तः स्पन्दमात्मनि पश्यति॥1248॥

परमार्थः शिवः स्वस्मिन् शक्त्या स्वभावभूतया।
निरुपादानसम्भारो विश्वं सृजति लीलया॥1249॥

इदन्तां बाह्यतां भेदं यत्र स्वैरं प्रकाशयेत्।
सर्वंसहा तदीया तु शक्तिर्विमर्शसंज्ञिका॥1250॥

व्यवस्थां वा स्थितिं वापि कार्यकारणभावताम्।
अभिलाषमथो रागं जनयेन्नियतिं त्विह॥1251॥

कार्यं विलापयन् स्वैरं कारणे संहृतिं पराम्।
तिरोधत्तेऽमलां मुक्तिं ततःपशुप्रमातृषु॥1252॥

भोक्तृतामानयेद् देवो जननाज्जननान्तरम्।
निग्रहाख्यममुं प्राहुस्तिरोधानं महाजनाः॥1253॥

अप्रतिघातिनीं स्वेच्छां स्वच्छामादृत्य यस्त्वसौ।
सोपायमनुपायं वा योगं प्रायोजयेत् सुखम्॥1254॥

अनुग्रहाख्यकृत्येन सद्यो मुक्तिन्तु लम्भयन्।
पञ्चकृत्यसुकृद् भाति कस्मैचिद् भोगमोक्षकौ॥1255॥

लीलां नाटयतस्त्वस्याहन्तया भास्यविश्वकम्।
इदन्तया भवेद्भातं चित्रं नात्रावधार्यताम्॥1256॥

शिवादिधरणीप्रान्तं षट्त्रिंशत्-तत्त्वसंचयम्।
स्वेनैवाभासितं पश्येत्सत्यमीशोऽपृथक्-स्थितम्॥1257॥

तत्तदर्थक्रियाकारि - विश्वभाव - प्रकाशकः।
सर्वभावस्वभावात्मा जयेत्स्वात्ममहेश्वरः॥1258॥

स्वस्वातन्त्र्यबलैनैव शक्तीनां प्रतिबिम्बनात्।
स्वस्मिंश्-चिद्-दर्पणे विश्वं भिन्नं बाह्यतया स्फुरेत्॥1259॥

शशविषाणिता नास्य रज्जुसर्पायिताऽपि नो।
शक्तिगर्भित-विश्वन्तु प्रतिबिम्बं शिवे प्रभौ॥1260॥

कर्तृताऽर्थक्रियायास्तु सत्तैषा व्यावहारिकी।
शिवेनाभासनाद् बोध्या भावानां न स्वतस्त्वियम्॥1261॥

संवृत्त्यात्मा तु या सत्ता या सत्ता पारमार्थिकी।
सत्ताव्याप्यं द्वयं चैतदाभासः पारमेश्वरः॥1262॥

स्वाभासात् पूर्वतः सिद्धः सर्वस्माच् चिन्महेश्वरः।
सर्वस्य साधकश्चैकः साध्यो नैव हि कस्यचित्॥1263॥

प्रमाणं वा प्रमेयं वा देशःकालः पुमान्न हि।
प्रकृतिः करणं वापि नैतस्य कारणं भवेत्॥1264॥

चिन्मयः परिपूर्णो यः स्पन्दसन्दोहनिर्भरः।
परमार्थोऽहमर्थात्मा विश्ववेद्यविमर्शकः॥1265॥

स्वस्मिन् सृजति विश्वं यो स्थापयत्यखिलं मुहुः।
संहरति तिरोधत्तेऽनुगृह्णाति निजेच्छया॥1266॥

आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्विभुः।
अनिरुद्धेच्छाप्रसरः प्रसरद्-दृक्-क्रियः शिवः॥1267॥

विश्वैकरूपविश्वात्मविश्वसर्गादिकारणम् ।
परप्रकाशवपुषं स्तुमः स्वच्छन्दभैरवम्॥1268॥

यथा स्थितस्तथैवास्स्व मा गा बाह्यमथान्तरम्।
केवलं चिद्विकासेन विकारनिकराञ्जहि॥1269॥

रूपांशे दर्पणः स्वच्छो नातिरिक्तघटाकृतिम्।
अतिरिक्ततया रूपं भासयन्नेकतः स्फुरेत्॥1270॥

खड्गस्तूभयतो रूपं बिम्बयेदिति विश्रुतम्।
स्फटिकः सर्वतो रूपं प्रतिबिम्बतया स्फुरेत्॥1271॥

रूपस्वच्छेषु किन्त्वेषु रूपस्य प्रतिबिम्बनम्।
दन्तोदके रसस्वच्छे रसस्यैव हि बिम्बनम्॥1272॥

चिद्-दर्पणे तु चिन्नाथः सर्वस्वच्छे समं जगत्।
प्रतिबिम्बं प्रकुर्वीत नानावैचित्र्यचित्रितम्॥1273॥

सर्वस्मादधिकं स्वच्छः स्वात्मा स्वच्छतमो जगत्।
अतिरिक्ततया भूयः स्वानधिकं विभावयेत्॥1274॥

दर्पणे मुखहस्तादिरूपाणां प्रतिबिम्बनम्।
भासमानं ह्यभेदेन दर्पणं नो विलोपयेत्॥1275॥

आभासानामभेदेन दर्पणस्यावभासनम्।
तु दर्पणतया तस्य स्थितिर्नैवावरुध्यते॥1276॥

विचित्रमातृमानानामाभासेन समं किल।
संविदः स्वप्रकाशस्य ह्यभेदेनापि भासनम्॥1277॥

संविद्रूपतया तस्याः स्थितिर्नैवावरुध्यते।
स्वच्छन्दता महेशस्य नियतिक्रमलङ्घने॥1278॥

बोधस्य स्वप्रकाशत्वं निजरूपप्रकाशनम्।
परप्रकाशनान्नैव भिद्यते स्वात्मकत्वतः॥1279॥

स्वस्यैव यः प्रकाशः स्यात् स्वस्य प्रकाश एव वा।
स्व एवास्य प्रकाशो न पर इत्यपि वा पुनः॥1280॥

प्रकाश एव चास्य स्वमित्यादि स्वप्रकाशकम्।
स्वातन्त्र्यन्तु समाश्रित्य महेशो विश्वभासकः॥1281॥

तच्च तस्य स्वभावःस्यान्नानयोर्भेदसम्भवः।
स्वोभावस्तु स्वभावो नु येन यन्नैव हीयते॥1282॥

यतश्च यन्न हीयेत तदव्याप्त्यादिशून्यकम्।
विमर्शिन्यां विशेषेण विषयोऽयं विवेचितः॥1283॥

अहंविमर्शरूपं यत् स्वातन्त्र्यं संविदो मतः।
तदन्यनिरपेक्षत्वं जगत्सृष्ट्यादिकर्मणि॥1284॥

विमर्शो देवदेवस्य प्रतिघातविवर्जितः।
भावभेदम् प्रकुर्वीत बलन्नु श्रीमहेशितुः॥1285॥

अभेदे भेदनं चैतद् भेदिते चाप्यभेदनम्।
विचित्रं च विरुद्धं च प्रथयेन्निर्विरोधतः॥1286॥

बलेनैनेन सम्पुष्टः स्वतन्त्रः सर्वशक्तिमान्।
भासयेल्लापयेद् वाऽपि स्वेच्छया विविधाकृतिम्॥1287॥

महादेवः निजां शक्तिं बलमादरयञ् शिवः।
नियतिं ह्यनुवर्तेत लङ्घयेद् वा निजेच्छया॥1288॥

स्वयमेष प्रकाशेत प्रकाशेत परात्मना।
विश्वावभासवैचित्र्ये न निर्बन्धोऽस्य कश्चन॥1289॥

अक्रमा क्रमयन्तीयं शक्तिः स्वातन्त्र्य-लक्षणा।
पारमैश्वर्यमाख्याति चिदानन्दमयं प्रभोः॥1290॥

आरुह्य बलमेतद्धि भिन्नभिन्नप्रमातृताम्।
नीलादिरूपतां धत्ते सुखादिं च स्वयं शिवः॥1291॥

स्व-संवेदनसंसिद्धं स्वातन्त्र्यन्नु चिदात्मनः।
विश्वावभासवैचित्र्ये हेतुत्वेनावधार्यताम्॥1292॥

महासम्पदमाधृत्य स्वातन्त्र्यं स्वस्वभावकम्।
भगवान् भूरिभर्गो हि स्वतन्त्रो भ्राजते स्वराट्॥1293॥

श्रीतन्त्रालोकसद्ग्रन्थे प्राह गुप्तगुरुर्महान्।
तस्य स्वतन्त्रभावो हि किं किं यन्न विचित्रयेत्॥1294॥

एक एवास्य धर्मोऽसौ सर्वाक्षेपेण वर्तते।
तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः॥1295॥

तस्य देवातिदेवस्य परापेक्षा न विद्यते।
परस्य तदपेक्षत्वात् स्वतन्त्रोऽयमतः स्थितः॥1296॥

हृदये देवदेवस्य स्पन्दे भागवते त्विदम्।
विश्वमुत्पत्तितः पूर्वं स्वातन्त्र्ये सम्प्रतिष्ठितम्॥1297॥

इच्छया श्रीमहेशस्य सृष्टौ सत्यामिदन्तया।
भासतेऽन्योन्यचित्रं सद् भिन्नार्थक्रियया युतम्॥1298॥

प्रतिष्ठास्थानकं तावद् हृदयं प्रोच्यते बुधैः।
जडानां चेतनं तत् स्यात् प्रकाशात्मत्वमस्य तु॥1299॥

तस्यापि च विमर्शः स्याद् हृदयं शास्त्रसम्मतम्।
सैषा सारतया प्रोक्तं हृदयं परमेष्ठिनः॥1300॥

चिन्मात्रमेव देवी च सा परा परमेश्वरी।
अष्टात्रिंशं च तत् तत्त्वं हृदयं तत् परात्परम्॥1301॥

चतुर्दश्युतं भद्रे तिथीशान्तसमन्वितम्।
तृतीयं ब्रह्म सुश्रोणि हृदयं भैरवात्मनः॥1302॥

सौरभर्गशिखाद्यास्तु आधारा आगमा इह।
सिद्धावामकपालिन्याद्यागमास्तु विशेषतः॥1303॥

त्रिकाश्रितस्य शैवस्य सिद्धान्तानां निरूपणे।
सुगृहीता महद्भिस्तु विद्वद्भिः सिद्धसाधकैः॥1304॥

ईश्वराद्वयवादात्मा सिद्धान्तानां शिखामणिः।
उपपत्त्यै कृता तस्य ह्याभासस्यावधारणा॥1305॥

श्रीत्रैयम्बकसिद्धान्तः काश्मीर - शैवदर्शनम्।
योगस्य साधनायाश्च तान्त्रिकः प्रोच्यते निधिः॥1306॥

शिवागमा दश प्रोक्ता भेदप्राधान्यमाश्रिताः।
भेदाभेदप्रधानास्तु रुद्रा अष्टादश स्मृताः॥1307॥

भैरवास्तुरचतुष्षष्टिरभेदप्रतिपादकाः ।
अमर्दकशिवाचार्यैः श्रीनाथाचार्यसत्तमैः॥1308॥

त्र्यम्बकादित्य सत् संज्ञैद्वैतादि सुनिरूपितम्।
दुर्वाससो महाचार्यात् कैलासपर्वतस्थितैः॥1309॥

त्र्यम्बकादित्यसद् - विद्यावंशे जातैर्मनीषिभिः।
महदद्वैततात्पर्यं शैवशास्त्रं सुपोषितम्॥1310॥

विद्योपासनशीलैस्तु मठिकागुरुभिर्दृढम्।
सौरभर्गशिखाद्यास् सदागमा ह्यनुशीलिताः॥1311॥

षडर्धसंज्ञकास्तावत् त्रिकशब्दसमर्चिताः।
श्रीसोमानन्दसद्वर्य्यैर्दर्शनपोषणाय हि॥1312॥

प्राधीता उद्धृतास्तेभ्यो दर्शन-कुसुमानि हि।
शिवदृष्टिविनिर्मित्या पोषितं शैवदर्शनम्॥1313॥

प्रथमो दर्शनग्रन्थो न्यायशैली-विजृम्भितः।
शिवदृष्ट्यभिधः प्रौढः काश्मीरशैवदर्शने॥1314॥

श्रीशिवदृष्टि-सद्ग्रन्थकर्त्रा महात्मना स्वयम्।
प्रोक्तं प्रकरणग्रन्थरूपत्वं सप्तमे किल॥1315॥

निगमानागमांश्चापि तर्कान् युक्तीः समाश्रिताः।
विरोधिनस्तु सिद्धान्तास् तेषामालोचनं कृतम्॥1316॥

अन्यदर्शनसिद्धानां स्वसिद्धान्त-विरोधिनाम्।
युक्तिसत्तर्कयुक्तानां तात्पर्यं सत् प्रकाशितम्॥1317॥

आलोचितमथो सम्यङ् न मिथ्या भर्त्सनं कृतम्।
वृत्तिकृतोत्पलेनापि प्रकरणत्वमादृतम्॥1318॥

सूक्ष्माणां सद्विचाराणां तत्त्वानाञ्च प्रकाशिका।
दर्शनानाञ्च सर्वेषां सिद्धान्तार्थविचारिका॥1319॥

शिवदृष्टिस्तु भाष्येणाभिनव - गुप्तकेन तु।
आलोचनाभिधानेन योजिता सा न लभ्यते॥1320॥

विवरणे परात्रीशिकाया उक्तन्तु दैशिकैः।
सोमानन्द-गुरूणां हि शैली श्रेष्ठा विराजते।।1321।।

स्वपक्षान्परपक्षांश्च निःशेषेण न वेद यः।
स्वयं स संशयाम्भोधौ निमज्जंस्तारयेत् कथम्।।1322।।

सामरस्यं शिवस्यास्ति शक्त्या स परमः शिवः।
आह्निके प्रथमे प्रोक्तम् परतत्त्वं तदेव हि।।1323।।

तदीया तु सिसृक्षा या स्वाभाविकी मता विदाम्।
साक्षात्कारस्तदीयस्तु स्वसंवेदनतो भवेत्।।1324।।

महेश्वरस्य चौन्मुख्यं सिसृक्षाहेतुतां व्रजेत्।
चिदानन्दैषणाज्ञानक्रियाशक्तिभिरन्वितः ।।1325।।

संविद्बोधमहेशानः सर्वव्यवहृतौ स्फुरेत्।
तत्त्वभुवनदेहादितयावस्थानकृत् स्वतः।।1326।।

विश्वोत्तीर्णोऽपि बोधात्मा विज्ञानभैरवो ह्ययम्।
विश्वात्मकत्वमभ्येति स्वस्वरूपादविच्युतः।।1327।।

जगतःकारणत्वन्तु स्वेच्छा या पारमेश्वरी।
भजते स्वस्वभावाऽस्य स्पन्दात्मानुत्तरात्मनः।।1328।।

शब्दब्रह्मणि सद्वाचि प्रभेदसंकुलात्मनि।
वैयाकरणसम्मत्या विचारस्त्विह दर्शितः।।1329।।

किन्तु वाचस्तु ब्रह्मत्वं सम्भवेन्नेति बोधितम्।
पश्यन्त्याः परता ब्रह्मरूपता बहुदूरगा।।1330।।

अविद्यावाद आस्ते यो वैयाकरण–सम्मतः।
तत्परीक्ष्य तु सम्प्रोक्तं युक्त्या स नोपपद्यते॥1331॥

पश्यन्त्या लक्षणं चापि नातिव्याप्त्यादिवर्जितम्।
शब्दस्य ब्रह्मरूपत्वं नोपपत्तिं समञ्चति॥1332॥

तत्त्वं व्याकरणे तावत् सम्भवेद् दार्शनं कुतः।
द्वितीय आह्निके त्वेतत् समीक्ष्योक्तं विशेषतः॥1333॥

शाक्तानान्तु मतोल्लेखस् तार्तीय आह्निके कृतः।
शक्तिशक्तिमतोस्तावदभेदः सूपपादितः॥1334॥

शक्तेः प्राधान्यपक्षे तु नोपपत्तिः कथञ्चन।
वाचः प्रधान्यकथनं सर्वथाऽनुपपत्तिमत्॥1335॥

शिवात्मत्वे तु सर्वत्र दोषाः प्रोक्तास्तु केचन।
तेषामेकैकशस्तावन्निराकरणमादृतम् ॥1336॥

चतुर्थ आह्निके श्रीमान् परमः शिव एककः।
जगद्रूपतयाभाति बहुधा तूपपादितम्॥1337॥

शक्तिशक्तिमतोर्येनाभेदो विजृम्भते सदा।
विश्वोत्तीर्णस्य तद्धेतोर्विश्वरूपत्वमित्यपि॥1338॥

उत्तीर्णता परा सत्ता प्रोक्तैका पारमार्थिकी।
सत्ताऽपरा शिवस्यैव विश्वता व्यावहारिकी॥1339॥

सत्तयोश्चैनयोः स्वस्मादुभयोरवभासनात्।
विश्वोत्तीर्णस्य तद्युक्तं विश्वरूपत्वमित्यपि॥1340॥

कार्यं कारणरूपेण सूक्ष्मरूपतया स्थितम्।
व्यापारात्तदभिव्यक्तिः कार्यं सत् सर्वदा ततः॥1341॥

शिवतत्त्वस्य तद्युक्तं विश्वरूपत्वमित्यपि।
अवयवित्वदृष्ट्यापि सम्बन्धाद् बुद्धिबोध्ययोः॥1342॥

शब्दार्थयोश्च सम्बन्धाद् विश्वरूपत्वमिष्यताम्।
सम्बन्धश्च प्रमाणप्रमेयभावाख्य इष्यताम्॥1343॥

स्मृतेश्च प्रत्यभिज्ञाया व्यवहारात् तदिष्यताम्।
सम्बन्धव्यवहाराच्च विश्वरूपत्वमिष्यते॥1344॥

पञ्चम आह्निके समता – प्रतिपादने।
शिवत्वं सर्वभावानां युक्त्यापि प्रतिपादितम्॥1345॥

शिवत्वलक्षणानां तूपलब्धिः प्राणिषु स्वतः।
अचेतनेषु यत्सा स्याद् समता विषयेष्वपि॥1346॥

विषयत्वबलात् तावत् प्रत्यक्षज्ञानकस्य च।
अनुमानस्य शब्दस्य चाचेतने शिवत्वकम्॥1347॥

प्रकाशमानताप्राप्तियोग्यत्वेन शिवत्वकम्।
सद्योजातशिशोश्चापि व्यवहाराच्छिवात्मता॥1348॥

जडानामथ जन्तूनां शिवत्वं साध्यते मुदा।
किञ्चिन्नाशिवमास्ते यः सर्वोऽपि जडजीवकः॥1349॥

अथ षष्ठाह्निके वादाः परेषां सुसमीक्षिताः।
वेदान्त–सांख्यजैनानां पाञ्चरात्रमतस्य च॥1350॥

न्यायवैशेषिकाणाञ्च विज्ञानवादिनान्तथा।
सर्वास्तिवादवैनाशिकानां मत-परीक्षणम्॥1351॥

शून्यवादस्य चार्वाकस्यापि निरसनं कृतम्।
शैवसम्मतयुक्तीनां सम्यक्त्वं प्रतिपादितम्॥1352॥

सम्पूर्तौ सप्तमे तावत् प्रत्यभिज्ञोपयोगिता।
शक्तेरुपासने तावत् प्राधान्यं प्रतिपादितम्॥1353॥

भोगमोक्षफलानाञ्च ह्युपाया बहुधोदिताः।
शिवदृष्टेस्तु सम्प्राप्तौ सर्वे स्युरधिकारिणः॥1354॥

सोमानन्दकृतिस्तावच्शिवदृष्ट्यै प्रकल्पते।
शिवदृष्टिप्रणेतॄंस्तु शिवाचार्यान्नुमः शिवान्॥1355॥

स्वात्ममहेश्वरात्मत्वं प्राप्य मोदे निरन्तरम्।
यद्दृष्टिपरिपूतस्तं गुरुं रामेश्वरं श्रये॥1356॥

कालि! त्वदीयचरणौ विधृतौ मयेमौ
सर्वं शुभं मम विधास्यत एव नूनम्।
यत्स्पर्शतस्तु शवतामपहाय तूर्णं
प्राप्ता हरेण शिवतापि महत्त्वपूर्णा॥1357॥

क्रमाक्रमात्मा कालश्च परः संविदि वर्तते।
काली नाम परा शक्तिः सैव देवस्य गीयते॥1358॥

एतदीश्वररूपत्वं परमात्मनि यत् किल।
तत् प्रमातरि मायीये कालतत्त्वं निगद्यते॥1359॥

अन्योन्यात्मकभेदावच्छेदनकलन-संग्रसिष्णुतया।
स्वातन्त्र्यमात्रसारा संवित् सा कालकर्षिणी कथिता॥1360॥

इत्थं द्वादशधा संवित् तिष्ठन्ती विश्वमातृषु।
एकैवेति न कोऽप्यस्याः क्रमस्य नियमः क्वचित्॥1361॥

क्रमाभावान्न युगपत् तदभावात् क्रमोऽपिनो।
क्रमाक्रमकथातीतं संवित्तत्त्वं सुनिर्मलम्॥1362॥

तस्य शक्तय एवैतास्तिस्रो भान्ति परादिकाः।
सृष्टौ स्थितौ लये तुर्ये तेनैता द्वादशोदिताः॥1363॥

सा च मातरि विज्ञाने माने करणगोचरे।
मेये चतुर्विधं भाति रूपमाश्रत्य सर्वदा॥1364॥

उमाख्य – संविदेवेयमन्तर्बाह्योभयात्मना।
स्वातन्त्र्याद् वर्तमानैव परामर्शस्वरूपिणी॥1365॥

कुलं च परमेशस्य शक्तिः सामर्थ्यमूर्ध्वता।
स्वातन्त्र्यमोजो वीर्यंच पिण्डः संविच्छरीरकम्॥1366॥

आत्मा चैवात्मना ज्ञातो यदाभवति साधकैः।
तदा विस्मयमात्मा वा आत्मन्येव प्रपश्यति॥1367॥

वेदान्ते वैष्णवे शैवे सौरे बौद्धेऽन्यतोपि च।
एक एव परः स्वात्मा ज्ञाता ज्ञेयं महेश्वरि॥1368॥

अहो तत्त्वस्य माहात्म्यं ज्ञातमात्रस्य सुन्दरि।
श्रोत्रान्तरं तु सम्प्राप्ते तत्क्षणादेव मुच्यते॥1369॥

कृत्वाधारधरां चमत्कृति-रसप्रोक्षाक्षणक्षालिता-
मात्तैर्मानसतः स्वभावकुसुमैः स्वामोदसन्दोहिभिः।
आनन्दामृतनिर्भरस्वहृदयानर्घार्घ - पात्रक्रमात्
त्वां देव्या सह देहदेवसदने देवार्चयेऽहर्निशम्॥1370॥

अकुलस्य परा येयं कौलिकी शक्तिरुत्तमा।
स एवायं विसर्गस्तु तस्माज्जातमिदं जगत्॥1371॥

सर्वेऽनुभूता यदि नान्तरार्थास्
त्वदात्मसात्कारसुरक्षिताः स्युः।
विज्ञातवस्त्वप्रतिमोषरूपा
काचित् स्मृतिर्नाम न सम्भवेत् तत्॥1372॥

सम्प्रेषिते चेतसि हारितार्थ-
ज्ञप्त्यै महाज्ञान! भवत्सकाशम्।
युक्त्या यदावेदयसि त्वमन्त-
स्तत्तत्त्वविद् वेत्ति विजृम्भितं ते॥1373॥

न दृश्यते त्वत्प्रतिभासशक्तेः
स्वप्नेऽर्थवैचित्र्यनिमित्तमन्यत् ।
तद्दृष्टसामर्थ्यतया सदैषा
विश्वप्रपञ्चप्रथनैकहेतुः ॥1374॥

दूरान्तिदेशादिगतार्कचन्द्र-
तारादिबाह्यप्रथयैव विघ्नः।
व्याप्त्य स्थितं विश्वमिदं विभुं त्वां
स्वदेहविच्छेद - विमोहमज्ञात्॥1375॥

शक्तिपातसमये विचारणं
प्राप्तमीश न करोषि कर्हिचित्।
अद्य मां प्रति किमागतं यतः
स्वप्रकाशनविधौ विलम्बसे॥1376॥

उपायजालं न शिवं प्रकाशयेद्
घटेन किं भाति सहस्त्रदीधितिः।
विवेचयन्नित्थमुदारदर्शनः
स्वयंप्रकाशं शिवमाविशेत् क्षणात्॥1377॥

आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्विभुः।
अनिरुद्धेच्छाप्रसरः प्रसरद्-दृक्क्रियः शिवः॥1378॥

शक्तित्रिशूलपरिगमयोगेन समस्तमपि परमेशे।
शिवनामनि परमार्थे विसृज्यते देवदेवेन॥1379॥

संसारजीर्णतरुमूलकलापकल्प-
संकल्पसान्तरतया परमार्थवह्नेः।
स्युर्विस्फुलिङ्गकणिका अपि चेत्तदन्त
र्देदीप्यते विमलबोधहुताशराशिः॥1380॥

संवित्तौ भाति यद्विश्वं तत्रापि किल संविदा।
तदेतत् त्रितयं द्वन्द्वयोगात् संघाततां गतम्॥1381॥

एकमेव परं रूपं भैरवस्याहमात्मकम्।
आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते॥1382॥

यस्या निरुपधिज्योतीरूपायाः शिवसंज्ञया।
व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे॥1383॥

निगमागमयोः संज्ञा श्रुतिः सर्वत्र नन्द्यते।
श्रुति - देवी - समर्चायां निरतं राष्ट्रभारतम्॥1384॥

एनामेव समाश्रित्य वाङ्मयं संस्कृतस्य तु।
समाजं योजयेत् सम्यक् संस्कारेण पुनः पुनः॥1385॥

ऋषयो यतयश्चापि गुरवो जनकस्तथा।
जननी सुहृदो वाऽपि त्यागेन तपसा युताः॥1386॥

संस्कारान्वित-संस्कृत्या समाजं पोषयन्ति हि।
व्यष्ट्या गृहेण राष्ट्रेण समूहेनापि सर्वथा॥1387॥

कर्मणा विहितेनैभी राष्ट्रधर्मो हि पोष्यते।
सर्वत्र संस्कृतेरस्या उद्घोष एक एव तु॥1388॥

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥1389॥

बृहति लघुनि स्याद् वा संस्कार-कर्मणि स्थितः।
आदितश्चान्त - पर्यन्तं कुम्भः कलशसंज्ञकः॥1390॥

न च कश्चिज्जनः कुम्भं देहं त्यक्त्वास्ति कर्मकृत्।
जीवनाधायकः सोऽयं कुम्भो राष्ट्रस्य वर्धकः॥1391॥

गायत्रीजनितस्याथो वेदस्य परमात्मनः।
गुरोर्यतिवरस्यापि समाजस्यापि सम्मतः॥1392॥

क्षीरसागर - मन्थोत्थो महाकुम्भमहोत्सवः।
कुम्भो वेदात्पुराणाच्च लोकवैदिककर्मणोः॥1393॥

ज्ञानवैराग्यभक्त्यर्थं सर्वानुष्ठान - संमतः।
अमृतैः पूर्यमाणो हि कुम्भः सर्वैः समादृतः॥1394॥

प्रवृत्तिस्तामसी हेया ग्राह्या यत् सात्त्विकी शुभा।
मोहिनीरूपमास्थाय सर्वभूतगुहाशयः॥1395॥

श्रीविष्णुर्देवपङ्क्तिस्थानमृतं समपाययत्।
सत्कृता मोहिनी तस्मात् साक्षिणा शम्भुना स्वयम्॥1396॥

विषं यदमृतीकृत्य पीत्वा संरक्षणं व्यधात्।
त्यागसम्भृत ईशोऽसौ पूज्योऽभूच्छ्रीहरेरपि॥1397॥

भगवान् शङ्करः प्राह श्रीदेवीं पार्वतीम् प्रति।
रुद्रयामलसत्तन्त्रे ह्यमृतीकरणात्मके॥1398॥

आर्यावर्तस्य पूर्वस्यां समुद्रोऽस्ति सनातनः।
हिमवद्वनपर्यन्तं विस्तारोऽभूत् कृते युगे॥1399॥

तस्योत्तरस्मिन् पुलिने गङ्गासागरसङ्गमः।
ततोऽप्यनतिदूरे वै मम स्थानं सनातनम्॥1400॥

जाह्नव्या दक्षिणे भागे मन्दारकुसुमैर्युतः।
यत्र वृक्षकृतच्छाये साक्षान्नारायणः स्वयम्॥1401॥

मन्दारस्य गिरेः पार्श्वे पुरा सिन्धुर्बभूव ह।
जाह्नवी चापि तत्रैव सङ्गता सागरं प्रति॥1402॥

मुरारिचरणाज्जाता गच्छन्ती चोत्तरां दिशम्।
जाह्नवी सा महापुण्या विशिष्टा शाल्मलीवने॥1403॥

तत्रैव कमठपृष्ठे दण्डं संस्थाप्य पर्वतम्।
मन्दारं शेषनागं च रज्जुं कृत्वा सुरासुराः॥1404॥

ममन्थुः सागरं सर्वे विष्णुं कृत्वा तु सन्निधौ।
अमृतैकान्तचित्तास्तु ममन्थुः सागरं शुभे॥1405॥

ततोऽमृतघटं धृत्वा भासयन् तेजसा भुवम्।
आविर्बभूव सहसा देवि! धन्वन्तरिः पुमान्॥1406॥

त्रयोदश्यां कृष्णपक्षे तुलार्के च शुभे दिने।
कार्तिके मासि सूर्यश्च तुलारूढो यदा भवेत्॥1407॥

चन्द्रोऽपि देवकार्यार्थमसिते मम वासरे।
गुरावपि तुलारूढे पिबन्त्यमृतमक्षयम्॥1408॥

शाल्मली सामृता जाता लोके सिमरिया स्मृता।
मिथिला-पुण्यभूमिस्था लोकपावन - कारिणी॥1409॥

अमृतकुम्भभूरेषा तद्वितरण - भूरपि।
हरेण हरिणा चापि श्रीयुतेन विभाविता॥1410॥

भागीरथी - प्रवाहस्य प्रस्थितस्योत्तरां दिशम्।
प्रतीच्यां दिशि सुस्थेयं जनकादिभिरादृता॥1411॥

मैथिलैर्मुनिशार्दूलैर्महाकुम्भमहोत्सवः ।
शाल्मली-तीरतोऽन्यत्र नीत एकादशस्वपि॥1412॥

रामेश्वरादि - तीर्थेषु पुण्यक्षेत्रेषु केषुचित्।
गते बहुतिथे काले दुष्टे राजनि शासति॥1413॥

महाकुम्भस्य सच्छोभा कल्पवासात्मिकाऽभवत्।
प्रयागे उज्जयिन्यां च नासिके हरभूम्यथ॥1414॥

चतुर्ष्वेव स्थलेष्वेतद् योज्यते पर्व निर्भरम्।
षोडशी सुन्दरी काली त्रिपुरा भवभामिनी॥1415॥

अन्तःशाक्तं महाशैवं गङ्गासिमरियातटे।
वसन्तं वैष्णवं साधुं युक्ताहार-विहारिणम्॥1416॥

चिदात्मन्नामकं विप्रमादिदेश तपस्विनम्।
आदिकुम्भस्थली प्रोक्ता शाल्मली वनशोभिता॥1417॥

नाम्ना सिमरिया ख्याता शिवेन पार्वतीम्प्रति।
याश्चान्याः सप्त सम्भान्ति भूमयः कुम्भकस्य तु॥1418॥

सर्वत्र विदुषां तावच्छास्त्राणामार्षसम्पदाम्।
श्रुतीनामागमानां च यतीनां सम्परिग्रहात्॥1419॥

भक्तानां धार्मिकाणाञ्च राष्ट्रधर्मानुयायिनाम्।
शासने सम्प्रविष्टानां दैववृत्तिजुषामपि॥1420॥

साहाय्येनानुतिष्ठेस्त्वं कुम्भपर्वमहोत्सवम्।
दीप्तो ज्ञप्तः सुधीस्त्यागी राष्ट्रशक्तिविवर्धकः॥1421॥

यमकालीं श्रितो योगी राष्ट्रीं संगमनीं स्मरन्।
आदिकुम्भस्थलीं पूर्वं महाकुम्भान्वितां व्यधात्॥1422॥

एतदम्ब! सदिदन्तु नेति नः
शङ्कया हृदि विकल्पलक्षणः।
यो यमः स खलु काल्यते त्वया
भूतसंयमनकेलिकोविदः ॥1423॥

लक्ष्मीः कौस्तुभ पारिजातक सुरा धन्वन्तरिश्चन्द्रमाः।
धेनुः कामदुघा सुरेश्वरगजो रम्भादिदेवाङ्गनाः॥1424॥

अश्वः सप्तमुखो विषं हरिधनुः शङ्खोऽमृतं चाम्बुधेः।
रत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तु नो मङ्गलम्॥1425॥

क्षीरसागरमन्थस्य यत् स्थानं शाल्मलीवनम्।
वाल्मीकिनापि सम्प्रोक्तमादिकाव्ये सविस्तरम्॥1426॥

अथ रामो महाप्राज्ञो विश्वामित्रं महामुनिम्।
पप्रच्छ प्राञ्जलिर्भूत्वा विशालामुत्तमां पुरीम्॥1427॥

श्रूयतां राम शक्रस्य कथां कथयतः श्रुताम्।
अस्मिन् देशे हि यद्वृत्तं शृणु तत्त्वेन राघव॥1428॥

पूर्वं कृतयुगे राम दितेः पुत्रा महाबलाः।
अदितेश्च महाभागा वीर्यवन्तः सुधार्मिकाः॥1429॥

ततस्तेषां नरव्याघ्र बुद्धिरासीन् महात्मनाम्।
अमरा विजराश्चैव कथं स्यामो निरामयाः॥1430॥

ततो निश्चित्य मथनं योक्त्रं कृत्वा तु वासुकिम्।
मन्थानं मन्दरं कृत्वा ममन्थुरमितौजसः॥1431॥

उत्पपाताग्निसंकाशं हालाहल - महाविषम्।
तेन दग्धं जगत् सर्वं सदेवासुरमानुषम्॥1432॥

हालाहलं-विषं घोरं संजग्राहामृतोपमम्।
देवान् विसृज्य देवेशो जगाम भगवान् हरः॥1433॥

उच्चैःश्रवा हयश्रेष्ठो मणिरत्नं च कौस्तुभम्।
उदतिष्ठन् नरश्रेष्ठ! तथैवामृतमुत्तमम्॥1434॥

यत्रोपविश्य सम्पीतममृतं सुरपूजितम्।
श्रीचिदात्मन्–विदा जुष्टं धाम सिमरियामहः॥1435॥

एतस्मिन्नन्तरे काले विष्णुर्नारायणः स्वयम्।
मोहिनीरूपमास्थाय ययौ दैत्यान् विमोहितान्॥1436॥

तां सम्मान्य तदा दैत्यराजो बलिरुवाच ह।
सुधा त्वया विभक्तव्या सर्वेषां सममेव च॥1437॥

अद्योपवासः कर्तव्यः साधुपानसमुत्सुकैः।
रात्रौ जागरणं कृत्वा स्नातव्यं स्वर्णदीजले॥1438॥

अत्रैव जाह्नवीतीरे ह्युत्तरे तु महद् वनम्।
शाल्मल्याः शोभते देवि गंगा चोत्तरवाहिनी॥1439॥

पुलिनेऽत्र पपुर्देवाः स्नात्वा सुविमले जले।
महादेववचो ह्यत्र प्रमाणं परमं स्मृतम्॥1440॥

देवानां द्वादशाहोभिर्मार्त्यैर्द्वादशवत्सरैः।
कुम्भपर्वाणि जायन्ते तथा द्वादशसंख्यया॥1441॥

काशीरत्नेन रत्नेन श्रीकुम्भपर्व – निर्णये।
स्वामिना करपात्रेण तथ्यमेतत् प्रकाशितम्॥1442॥

द्वादशकुम्भपर्वाणि वर्षेषु द्वादशस्वपि।
देवानां द्वादशाहःसु पृष्ठे द्वाविंशतौ स्फुटम्॥1443॥

कुत्र कदा भवेत् कुम्भोत्सवः परमपावनः।
इत्येतं प्रश्नमादाय शिवेनोत्तरितं मुदा॥1444॥

देवाश्चागत्य मज्जन्ति तत्र मासं वसन्ति च।
तस्मिन् स्नानेन दानेन पुण्यमक्षय्यमाप्नुयात्॥1445॥

सिंहे युतौ च रेवायां मिथुने पुरुषोत्तमे।
मीनभे ब्रह्मपुत्रे च तव क्षेत्रे वरानने॥1446॥

धनूराशि - स्थिते भानौ गङ्गासागरसङ्गमे।
कुम्भराशौ तु काबेर्यां तुलार्के शाल्मलीवने॥1447॥

वृश्चिके ब्रह्मसरसि कर्कटे कृष्णशासने।
कन्यायां दक्षिणे सिन्धौ यत्राहं रामपूजितः॥1448॥

अथाप्यन्योऽपि योगोस्ति यत्र स्नानं सुधोपमम्।
मेषराशिस्थिते भानौ कुम्भे चैव गुरौ स्थिते॥1449॥

गङ्गाद्वारे भवद्योगो भुक्तिमुक्तिप्रदः शिवे।
मेषे गुरौ तथा देवि! मकरस्थे दिवाकरे॥1450॥

त्रिवेण्यां जायते योगः सद्योऽमृतफलं लभेत्।
शिप्रायां मेषगे सूर्ये सिंहस्थे च बृहस्पतौ॥1451॥

मासं यावन्नरः स्थित्वाऽमृतत्वं याति दुर्लभम्।
वचोऽमृतं पिबन्नास्ते सुसुखी धार्मिकः सुधीः॥1452॥

या तु मथ्नाति पापानि प्रसूते सुकृतं महत्।
भारतभालभूतैषा मिथिलाऽनुत्तमा मही॥1453॥

महादेववचो ग्राह्यं मिथिलाखण्ड-यामले।
मिथिला सर्वतीर्थानामुत्तमं तीर्थसत्तमम्॥1454॥

बैकुण्ठगान् पुरस्कृत्य लोकाँल्लक्ष्मीरवातरत्।
वैकुण्ठस्तु निजांशेन मिथिलाभूमिमाविशत्॥1455॥

अतो निवासभूमिस्ते सर्वस्थानाद् विशिष्यते।
वैकुण्ठान्न कलान्यूना दृश्यते मिथिला मया॥1456॥

अविमुक्ते मम क्षेत्रे संवत्सर - निवासतः।
यत्फलं लभते मर्त्यो मिथिलायां दिने दिने॥1457॥

तीर्थराजे विधिक्षेत्रे वर्षत्रयनिवासतः।
यत्फलं समवाप्नोति मिथिलायां दिनेन तत्॥1458॥

अयोध्यायां निवासेन यत्फलं लभते नृप।
तत्फलं समवाप्नोति समानं नात्र संशयः॥1459॥

कुरुक्षेत्रे तु यद्दानं ब्राह्मणेभ्यः प्रदीयते।
तस्मात् कोटिगुणम् पुण्यं मिथिलायां धरेश्वर॥1460॥

बृहद्विष्णुपुराणेऽपि प्रोक्तं माहात्म्यमुत्तमम्।
मिथिलाधामतीर्थस्य दिव्यैरपि नुतस्य हि॥1461॥

कथंचित् तत्र चेद्वास उद्धाराय भवेदलम्।
तत्र यात्रा महापुण्या सर्वकामसमृद्धिदा॥1462॥

मिथिलां ये नमस्यन्ति देशान्तरगता अपि।
तेषां भुक्तिश्च मुक्तिश्च जायते नात्र संशयः॥1463॥

महापुण्यातिरेकैश्च जनुर्लब्ध्वा च भारते।
मिथिलाया निवासस्य नराः संयान्ति योग्यताम्॥1464॥

मृद्-दण्डचक्रकादीनां कारणत्वं घटादिके।
लोके यदुच्यते तन्नो युज्यते युक्तिरोधतः॥1465॥

निर्मिमीते घटं नैव मृद् वा दण्डोऽथ चक्रकम्।
मृदादयस्तु सापेक्षा मिथो हेतुर्घटं प्रति॥1466॥

न सम्भवेदपेक्षायाश्चेतनधर्मता यतः।
मृदो दण्डस्य चक्रस्य न सा चैतन्यवर्जनात्॥1467॥

कुलाले तु मृदादीनामपेक्षा नो विरुध्यते।
ततोऽस्य हेतुता नूनमविरुद्धेति चेच्छृणु॥1468॥

कर्मणः कारणत्वं यज्जगत्कार्यं प्रतीष्यते।
अचेतनतया तद्धि स्वीकर्तुं शक्यते कुतः॥1469॥

जगत्कारणता नापि सम्भवेदीश्वरस्य ते।
ईश्वरः कर्मसापेक्षश्चेन्न पूर्णः स्वतन्त्रदृक्॥1470॥

कुतः पूर्णस्वतन्त्रं तद् यदन्यन्मुखमीक्षते।
परावलम्बिनि स्वस्मिन् पूर्णस्वातन्त्र्यसंक्षयात्॥1471॥

निरपेक्षस्ततश्चेश आकाशादिभिरन्वितम्।
निर्मिमीते जगच्चैतदेष सिद्धान्त इष्यताम्॥1472॥

दर्पणे भासते यद्वद्दर्पणप्रतिबिम्बकम्।
आकाशादीन् तथा भावान् स्वात्मनीशोऽवभासयेत्॥1473॥

नेशात्पृथग्जगद्ध्येतत्तदन्तर्गतमस्ति यत्।
भासमानमिदं विश्वं चेतनाचेतनात्मकम्॥1474॥

भान्तु जीवा मिथो भिन्ना मानमेयमयं जगत्।
ईश्वरापेक्षया किन्तु न जीवा नो जगत् पृथक्॥1475॥

शाखा इति हि नानात्वं वृक्ष इत्येकधीर्यथा।
जीवा जगन्ति चेत्येवमीश्वर इति धीः पृथक्॥1476॥

सर्वेऽपि भासिता भेदाः स्वाधारेऽभिन्नतां श्रिताः।
स्वसंवेदनतश्चापि ह्युपपत्त्याऽगमेन च॥1477॥

अहमीश्वर एवास्मि नान्यस्तस्मादिति प्रधीः।
प्रत्यभिज्ञा तया सिद्धिः परात्माऽथोऽपरात्मिका॥1478॥

परसिद्धिर्मता मुक्तिरपराभ्युदयात्मिका।
सिद्धेस्तु तारतम्यं तत् साक्षात्कारानुरोधतः॥1479॥

राज्ञा दत्ताधिकारस्य सम्भवेद् राजदासता।
ईशा दत्ताधिकारस्य सम्भवेदीशदासता॥1480॥

अधिकारस्य सम्भोगो राजदासे यथा श्रुतः।
तथेशदासे सम्भोगो भुक्तेर्मुक्तेश्च सम्मतः॥1481॥

प्रकाशोऽपूर्व आनन्दः स्वातन्त्र्यं च त्रिकं हि यत्।
परमार्थस्वरूपं तत्पारमेश्वरमुच्यते॥1482॥

मुमुक्षवो जना ये ते सर्वसाधारणा मताः।
प्रत्यभिज्ञाख्यशास्त्रेस्मिन्नधिकारिण आदृताः॥1483॥

अत्रोपदिश्यते तावदिदं सर्वं महेश्वरः।
उदेति ह्युपदेश्यस्य स एवास्म्यहमीश्वरः॥1484॥

यस्य यस्य स्वरूपं स्वं प्रज्ञानमुपदिश्यते।
प्रत्यभिज्ञात्मसंबोधस् तस्योदेति महाफलम्॥1485॥

शास्त्रेण प्रतिपत्त्या च गुरुवाक्येन वा स्वतः।
ज्ञाते शिवत्वे सर्वस्थेऽनपेक्षं स्यात् प्रमाणकम्॥1486॥

शिवोऽहमस्मि नान्योस्मि भावनाऽपेक्ष्यतेऽपि नो।
सुवर्णज्ञानसम्प्राप्तौ साधनं भावना वृथा॥1487॥

परमेश्वररूपं यत्स्वातन्त्र्यं प्राप्यते विदा।
भक्त्या तदेव दास्यं स्यादैशः पश्चादनुग्रहः॥1488॥

परमेश्वरदास्यं यत् सा काष्ठा सम्पदः परा।
दास्याभावः पराकाष्ठा विपदः शास्त्रसम्मता॥1489॥

भक्तिलक्ष्मीसमृद्धस्य समृद्धिरुत्पलादृता।
तद्धीनस्य तु दारिद्र्यमुत्पलेनानुमोदितम्॥1490॥

समस्तसम्पदः प्राप्तौ प्रत्यभिज्ञोपयुज्यते।
यतस्तां शरणीकुर्वन् वन्दे रामेश्वरीं कलाम्॥1491॥

समस्तसम्पदः प्राप्तिर्हेतुर्यस्यास्तु सम्भवेत्।
सा प्रोक्ता प्रत्यभिज्ञात्मा परमेशगुरोः प्रिया॥1492॥

पुराणसिद्ध ईशस्तु प्रतिपादित आगमे।
अनुमानादिसन्नीतः पूर्णशक्तिर्विराजते॥1493॥

स्वात्मन्यभिमुखीभूते तद्विषये तदिच्छया।
दृक्शक्तिप्रतिसन्धानादुदेति ज्ञानमव्ययम्॥1494॥

यदुक्तं प्रत्यभिज्ञेति स एवास्म्यहमीश्वरः।
तत्प्रतिबन्धकी - भूता या विपरीतभावना॥1495॥

तस्या हानं समाख्यातं गुरुभिः शास्त्रसम्मतम्।
सा येन गुरुणाऽवारि ज्योती रामेश्वरं नुमः॥1496॥

प्रत्यभिज्ञासमुत्थित्यै समर्थाचरणं हि यत्।
शास्त्रकृद्भिः समाख्यातं प्रत्यभिज्ञोपपादनम्॥1497॥

स्वप्रकाशतया भातेऽप्यात्मनि पूर्णचेतना।
केनचिद्धेतुना यस्मान्नोदेति जीवता ततः॥1498॥

दृक्-क्रियात्मकशक्त्याविष्करणं गुरुकृत्यकम्।
तदनुप्रत्यभिज्ञायां जातायामीश्वरस्य हि॥1499॥

प्रतीतिः सिध्यति ह्येषा स एवास्म्यहमीश्वरः।
प्रमाणादनुमानाच्च शीलयन्नुक्तवान् गुरुः॥1500॥

कर्तरि ज्ञातरि स्वात्मन्यादि - सिद्धे महेश्वरे।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः॥1501॥

कर्ता ज्ञाता च जीवात्मा ह्यादिसिद्धो महेश्वरः।
यस्मात् ततो विवेकी को जीवात्मा नेश्वरो वदेत्॥1502॥

केन वा साधनेनायमीश्वरीभावमाप्नुयात्।
दृक्-क्रियाशक्तिसन्धानात् प्रत्यभिज्ञोपदर्श्यते॥1503॥

जीवनाश्रयसम्पत्त्या सर्वेषां प्राणिनां स्थितिः।
जीवनं नाम चैतन्यं तच्च ज्ञानक्रियात्मकम्॥1504॥

जीवानां ज्ञानशक्तिस्तु स्वतः सिद्धा प्रकाशते।
क्रियाशक्तिस्तु निर्वर्त्यं कार्यमाश्रित्य तिष्ठति॥1505॥

परेण स्वेन सन्धेया शिवागमसुनिर्मला।
ज्ञानशक्तिस्तथान्यस्था नानुसन्धान - वर्जिता॥1506॥

ज्ञानशक्तिस्तु जीवानां देशेनाऽऽकलिता यतः।
वस्तुनाऽथ च कालेन संकोचमञ्चति ध्रुवम्॥1507॥

तत्तज्ज्ञेयपदार्थानुसन्धानक्रमभाग्भवेत् ।
सोऽयं प्रमातृसद्रूपो महेश्वर इतीर्यते॥1508॥

क्रमरहित आनन्दश्चैतन्यात्मा महेश्वरः।
प्रत्यभिज्ञा समुन्नेयः शैवाचार्यप्रसादतः॥1509॥

दास्यं माहेश्वरं प्राप्तः स्वात्मानं बुध्यते शिवम्।
मदात्मनाऽथ शक्त्यात्मा स्फुरन् भाति महेश्वरः॥1510॥

सर्वेषामिह भूतानां प्रतिष्ठा जीवदाश्रया।
ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम्॥1511॥

तत्र ज्ञानं स्वतः सिद्धं क्रिया कार्याश्रिता सती।
परैरप्युपलक्ष्येत तथान्यज्ज्ञानमुच्यते॥1512॥

या चैषां प्रतिभा तत्तत्पदार्थक्रमरूषिता।
अक्रमानन्दचिद्रूपः प्रमाता स महेश्वरः॥1513॥

सोमानन्दगुरुः प्राह शिवदासो महार्थवित्।
सदाशिवात्मना वेत्ति सदा वेत्ति मदात्मना॥1514॥

प्रकाशः शिव इत्युक्तो विमर्शः शक्तिरुच्यते।
सा च ज्ञानक्रियाशक्तिः पदार्थमवभासयेत्॥1515॥

शक्त्या जुष्टः प्रमातायं सविमर्शो महेश्वरः।
सर्वं सूर्यादिकं वस्तु भान्तं सन्तं तमेव तु॥1516॥

तद्भासैव विभात्येतदनुभातीति वै श्रुतिः।
काठकोपनिषत्प्राह - प्राहतन्त्रश्रुतिस्तथा॥1517॥

एतावता प्रकाशो य एक एव सदा स्थितः।
विषयभेदसद्भावाद् भिद्यते बहुरूपकः॥1518॥

अनन्तशक्तिसामर्थ्याद् भूतभौतिकभावितान्।
पदार्थान् दृश्यमानांस्तु भासयेत् स महेश्वरः॥1519॥

एष चानन्तशक्तित्वादेवमाभासयत्यमून्।
भावानिच्छावशादेषां क्रिया निर्मातृतास्य सा॥1520॥

तदैक्येन विना नास्ति संविदां लोकपद्धतिः।
प्रकाशैक्यात् तदेकत्वं मातैकः स इति स्थितिः॥1521॥

स एव विमृशत्त्वेन नियतेन महेश्वरः।
विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः॥1522॥

अन्नपूर्णेश्वरः काश्यां महादेवः सदार्च्यते।
नियतिं ह्यनुवर्तेत समुल्लङ्घेदसौ क्वचित्॥1523॥

स्वातन्त्र्यात्मा सदा स्वच्छो भाति तत्तत्तदात्मना।
योगीच्छया घटे जन्ये मृदन्वयाविभावनात्॥1524॥

संसारिणो हि बद्धस्य मायाशक्त्यान्धता मता।
प्रत्यभिज्ञापितैश्वर्ये मुक्तता प्रविजृम्भते॥1525॥

प्रमाता चेश्वराभिन्नः प्रमेयं च तथास्ति चेत्।
प्रमातुश्च प्रमेयस्य पार्थक्यं नैव सम्भवेत्॥1526॥

प्रमेयं तु समानं स्यात् तदेवं बद्धमुक्तयोः।
इतिचेन्न यतो मुक्तः संवीक्षेतोभयोरपि॥1527॥

अमृते गरले चायमभेदं समतामहो।
बद्धस्त्वभेददृग् नास्ति सन्तं तं नैव पश्यति॥1528॥

अतोभेदन्नु सम्पश्येत् तद्भेदो मुक्तबद्धयोः।
सर्वत्रैव कलानाथः स्वेच्छया प्रविजृम्भते॥1529॥

एष प्रमाता मायान्धः संसारी कर्मबन्धनः।
विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते॥1530॥

मेयं साधारणं मुक्तः स्वात्माभेदेन मन्यते।
महेश्वरो यथा बद्धः पुनरत्यन्तभेदवत्॥1531॥

अर्थक्रिया द्विधा प्रोक्ता बाह्या चमत्कृतिस्तथा।
आद्या तु प्रत्यभिज्ञानरहिताङ्कुरणादिका॥1532॥

चमत्कृत्येकसारा तु प्रत्यभिज्ञामपेक्षते।
अहमीश्वर एवास्मि परापरात्मसिद्धिदृक्॥1533॥

जीवात्मैकत्वशक्त्यक्षविभूत्यादि – समन्विता।
विश्वेश्वरात्मना भाते स्वात्मनि गुणभावना॥1534॥

यावन्नोदेति तावद् वै पूर्णभावस्तु नोदियात्।
शिवगुरोः सत्कृपामाप्य सर्वज्ञत्वादिलक्षणाम्॥1535॥

समुत्कर्षं परामृश्य दीक्षितः पूर्णतामियात्।
श्रीमातृप्रत्यभिज्ञाया माहात्म्यं स्यात् समुज्ज्वलम्॥1536॥

भगवान् भूरिभर्गो यत् परमार्थः स्वरूपदृक्।
स्वात्मारामस्ततः पश्येद् विश्वोत्तीर्णवपुःस्वकम्॥1537॥

प्रस्फुरत्ता सतः स्पन्दः स्वभावो विमलो यतः।
एकः स्फुरणशीलस्तद् द्विरूपः सर्वरूपधृक्॥1538॥

अनौपम्यं समाम्नातमेकैश्वर्यं महेशितुः।
विश्वरूपतया जृम्भा विश्वोत्तीर्णतया सतः॥1539॥

विश्वमये स्वरूपेऽस्य षट्त्रिंशत्-तत्त्वभासनम्।
प्रथमं शिवतत्त्वं चेदन्त्यं तत्त्वं धरात्मकम्॥1540॥

नातः परं यतः सर्गस्तत्त्वस्य यस्य कस्यचित्।
लघ्वी ततो निवृत्त्याख्या कलाशक्तिर्धरानुगा॥1541॥

ईश्वराद्वयवादः सन् - प्रत्यभिज्ञाख्यदर्शने।
सम्राड् विभ्राजते देवो महेश्वर इति श्रुतः॥1542॥

संविन्मयी शिवा नित्यमाश्लिष्यति महेश्वरम्।
उपायोपेयरूपेण भामि देवोऽनया स्फुरन्॥1543॥

स्वच्छन्दः स्वेच्छया शक्तिमवष्टभ्य महेश्वरः।
पुंस्त्वस्त्रीत्वविकल्पेन भोक्ता भोग्यात्मतां व्रजेत्॥1544॥

स्वरूपादच्युतो वेत्ता वेद्योऽनावृत - विश्वभूः।
भावाभावात्मविश्वस्य प्रकाशः शिव एव हि॥1545॥

स्वरूपं च स्वभावश्च सार आत्मा प्रकीर्तितः।
यावन्न वेदका एते तावद् वेद्याः कथं प्रिये॥1546॥

प्रकाशस्य विमर्शेन सामरस्यन्तु शाश्वतम्।
संवित्तिः प्रोच्यते संवित् स्वसंवेदनमेव वा॥1547॥

मानाधीनप्रकाशा नो देशकालाद्ययन्त्रिता।
निरपेक्षा स्वतः पूर्णा स्वतन्त्रा सर्वभासिका॥1548॥

प्रमायां न प्रवर्तन्ते मानानि यदुपेक्षया।
किं प्रमाणं भवेत् तत्र मानप्राणान् वितन्वति॥1549॥

स्वात्ममहेश्वरश्चायं समावेश्यः परो मतः।
चितेः संकुचितायास्तु चित्या तादात्म्यसम्भवः॥1550॥

असंकुचितया बोधः समावेशः प्रकीर्तितः।
चिद्भावे जडभावस्य जीवत्वस्य शिवत्वके॥1551॥

निमज्जनाच्छिवत्वस्य चित्त्वस्य प्रथनं हि सः।
चतुर्द्धा साधना प्रोक्ता समावेश-प्रयोजना॥1552॥

अनुपायप्रधानैका सोपाया तु त्रिधा मता।
उपायास्तु त्रिधा प्रोक्ताः शाम्भवः शाक्त आणवः॥1553॥

दृढेन शक्तिपातेन सकृद्देशनयाऽथवा।
शिवतादात्म्यसम्पत्तिर्योगोऽनुपाय इष्यते॥1554॥

न रूपलाभो नित्यत्वान्न ज्ञप्तिः स्वप्रकाशनात्।
नोपायो व्यतिरिक्तस्याभावात् स्वात्ममहेश्वरे॥1555॥

कालेनाकलिते देशेनापरिच्छिन्न आत्मनि।
अप्युपाधिभिरम्लाने आकृत्याप्यनियन्त्रिते॥1556॥

प्रमाणैरप्यसन्दिष्टे मानानां प्राणदायिनि।
चिद्धाम्नि दर्पणे स्वच्छे विश्वन्तु प्रतिबिम्बितम्॥1557॥

दृढामर्शेन चैतेन निरुपायेन जायते।
पारमेशः समावेशो नात्र पूजादियन्त्रणा॥1558॥

अनेनोत्तमयोगेन प्रवेशः शिवमातरि।
येषां न सम्भवेत् तेषां कृते सोपाय इष्यते॥1559॥

त्रिविधस्तु समावेशः शाम्भवः शाक्त आणवः।
निर्विकल्पे परामर्शे भासमानमनुत्तरम्॥1560॥

इच्छया स्वस्वरूपेण प्रथते शाम्भवो हि सः।
सर्वो बोधचिदाकाशे भावोऽस्ति प्रतिबिम्बितः॥1561॥

प्रोक्ततल्लक्षणोपेत इत्येवमनुशीलनात्।
निर्विकल्पः समावेशो जीवन्मुक्ति-फलप्रदः॥1562॥

यन्नैर्मल्यं भवेद् यत्र तत्र तत् प्रतिबिम्बति।
सर्वनैर्मल्यसम्पन्ने स्वात्मनि सर्वमेव हि॥1563॥

यस्य संविदि विश्वोऽयं शक्त्या स्वातन्त्र्यसंज्ञया।
प्रतिबिम्बतया भाति विश्वेशोहं स विश्वभाः॥1564॥

भावा भान्ति यथादर्शे निर्मलेऽपि विरोधिनः।
अनामिश्रास्तथैतस्मिंश्चिन्नाथे स विश्वसंचयाः॥1565॥

पूर्णसंवित्स्वभावे या राजते पूर्णता सदा।
परा वाक् सा पराहन्ता हृदयं सार उच्यते॥1566॥

सोच्यते तु परारूपा ह्यभेदेन स्थिता तु या।
यया शक्त्या स्वात्मनीशे दर्पणे नगरादिवत्॥1567॥

विश्वरूपस्य भेदेनाभेदेनाप्यवभासनम्।
साऽपरा प्रोच्यते शक्तिः शक्तित्रयमयः प्रभुः॥1568॥

स्वच्छोऽसांकेतिको यो हि परामर्शः शिवावहः।
शाम्भवोपायविद् योगी तज्ज्ञः शैवो जयी महान्॥1569॥

विकल्पादात्मनो बन्धः प्रतिद्वन्द्वि-विकल्पतः।
हन्यते बन्धहेतुस्तु विकल्पोऽभ्युदयस्ततः॥1570॥

तत्त्वेभ्यस्तु समुत्तीर्णः परमार्थवपुः शिवः।
तेन प्राणिति विश्वं हि विश्वोत्तीर्णोस्मि विश्वभूः॥1571॥

भेदाभेदात्मकः शाक्तो योगः शैवेन योजयेत्।
शुभा स्यात् प्रत्यभिज्ञाता शिवता सत्प्रमातृता॥1572॥

अहंकारेण बुद्ध्या वा मनसा यद् विकल्पनम्।
अनुस्यूता तु सर्वत्र प्रोज्ज्वला स्थितिरुत्तमा॥1573॥

अहमहमिति स्वावमर्शनात् शाक्तसम्भवः।
द्वैतमालिन्यशङ्काया उन्मूलनकरः शुभः॥1574॥

अथाणवस्तु भेदात्मा ह्युपाय इदमात्मकः।
उच्चारकरणध्यानवर्ण - प्रकल्पनादिकः॥1575॥

बाह्यविषय - सापेक्षविकल्पाऽभ्याससंयुतः।
समावेशस्तु तज्जः स्यादाणवो हि तृतीयकः॥1576॥

त्रिविधोऽयं समावेशः शैवः शाक्तस्तथाणवः।
इच्छाज्ञानक्रियायोगादुत्तरोत्तर - सम्भृतः॥1577॥

अकृत्रिमे परामर्शे त्वहमात्मनि सच्छिवः।
इदन्तामर्शनं कुर्यात् प्रत्यभिज्ञा - सुदर्शने॥1578॥

साधकः सुकृती वन्द्याच्‍शिवगुरोरनुग्रहात्।
योगेन प्रत्यभिज्ञां स्वां सम्प्राप्य शिवतां व्रजेत्॥1579॥

युक्तियुक्तश्च सत्यश्च चमत्कृतिलसद्वपुः।
ऐश्वर्यभरितः शश्वदानन्दरसनिर्भरः॥1580॥

युक्त्युपेतः प्रशान्तात्मा श्रुत्यर्थः परमं महः।
वादानां प्रोच्यते सम्राडीश्वराद्वयवादसन्॥1581॥

शिवप्रमातृतापन्नः प्रत्यभिज्ञास्वरूपदृक्।
आत्मानमप्यसौ तस्माद् भिन्नं नो लभते प्रभोः॥1582॥

प्रभोर्लब्धस्वरूपं यदिदमात्मजगत् कुतः।
बन्धमोक्षौ न जानाति परमार्थौ विवेकयुक्॥1583॥

परमार्थो न बन्धश्चेत् कुतो मुक्तिस्तु सम्भवेत्।
भगवानेव सर्वेषु तेषु तेषु स्वरूपधृक्॥1584॥

व्यवहरन् गतिं कुर्वन् ततश्चेतश्च सम्भ्रमन्।
अच्युतो विश्वरूपश्च भवेन्नानात्मतां श्रितः॥1585॥

एवंविधं प्रभुं जानन्नात्मानं नैव बाध्यते।
देहे गेहेऽथवा शून्य इन्द्रिये प्राण एव वा॥1586॥

बुद्धौ मनस्यहंकारे कृत्रिमाहन्तया मनाक्।
अवाप्याकृत्रिमस्वात्मप्रमातृत्वं शुभं कृती॥1587॥

रमते परमध्येये ज्ञेये स्वात्ममहेश्वरे।
नैनं बध्नाति शून्यत्वमिदन्ता वा कदाचन॥1588॥

ममता लौकिकी त्वस्माद्याति दूरातिदूरतः।
देशः कालः क्रिया किञ्चिद् वस्त्वन्तरमथापि वा॥1589॥

प्रकाशते हि तत् सर्वं भासमाने महेश्वरे।
यतस्ततः समेषां स स्वात्मा भाति महेश्वरः॥1590॥

आगमे निगमे वापि धर्मशास्त्रपुराणके।
अस्यैव स्वात्मनो ज्ञेयं माहात्म्यं गीयते भृशम्॥1591॥

समस्तसम्पदः प्राप्तौ ध्येयः स्वात्मा निगद्यते।
यमानन्दमयं ज्ञात्वा पूर्णानन्दो विराजते॥1592॥

तप्यतोऽस्य तपो दिव्यं देशः कालः क्रियाऽपि वा।
उल्लासयेज्जगत्सर्वमानन्दं निर्मलं महत्॥1593॥

आनन्दनर्तनस्यास्य क्रीडोल्लास–विधायिनः।
उपासना भवेदात्मविषया नान्यगा स्वगा॥1594॥

उपासतेऽपि ये चान्ये देवं यं कंचनापि तु।
स देवोऽप्यहमेवास्ति नो चेद् देवो जडो भवेत्॥1595॥

शक्तिमतो महेशस्य शक्तिर्या चिन्मयी स्वतः।
प्राशस्त्यं तन्मयड् ब्रूते पाणिनिः स्मर्यतां ननु॥1596॥

सुन्दरीं श्रीमयीं शुभ्रां सदानन्दमयीं शिवाम्।
भगवानन्नपूर्णाम्बां यामासाद्य सतीमुमाम्॥1597॥

परिपूर्णाक्रियानन्ददृगीशो विलसन्नहो।
आनन्दकानने स्तुत्यो देवदेवो विराजते॥1598॥

इमं मानवदेहं श्रीर्देवसदनमाह यत्।
देहाहन्तां ततोऽनर्थकरीं नैवाश्रयेद् बुधः॥1599॥

सुषुम्णा कौण्डली शक्तिरिडापिङ्गल–मध्यगा।
जागृतायाममुष्यान्तु मध्यधाम न सन्त्यजेत्॥1600॥

सुषुम्णां सेवमानः श्रीशैवो योगी स्वमां सतीम्।
सेवमानो स्मरेन्नैव भेदभूमिं विनिन्दिताम्॥1601॥

नित्यतृप्तस्य पूर्णस्य मातरमनुगच्छतः।
प्राप्तीच्छा योगिनो ज्ञस्य विषये जागृयात् कथम्॥1602॥

शिवत्वे तु परिज्ञाते श्रीमातुः पूजको भवेत्।
स्वराट् त्रिशूलिनः स्नेहपात्रमपि जगत्सुहृत्॥1603॥

बोधवैभवमात्मानं पश्यन्नद्वैतसुन्दरम्।
रमते रमयेच्चापि स्वान् स्वयं मातृपूजकः॥1604॥

निष्काममेव कर्मास्य नित्यतृप्तस्य योगिनः।
श्रीमातुः स्नेहपात्रस्योदेति श्रीगुरुता शिवा॥1605॥

सर्वस्य भासको द्रष्टा नानादृश्यन्तु वैभवम्।
भेदमभेदमप्यन्यद् भासयन् राजतेऽनिशम्॥1606॥

भेदः स चायं न ततो विभिन्नः
स्वच्छन्द - सुस्वच्छतमैकधाम्नः।
प्रासादहस्त्यश्वपयोदसिन्धु-
र्गिर्यादि यद्वन्मणि - दर्पणादेः॥1607॥

इदमित्युचितः संवित्-प्रकाशोऽन्यस्य वस्तुनः।
प्रतिष्ठात्मकतां गच्छेदहमित्यात्मना पुनः॥1608॥

स्तुत्यानया मननपीठमुपागतैषा
क्रीडायुता सकलमातृसुधार्पिकाम्बा।
गौरी महेशललिता पुरुसिद्धिदात्री
स्यादन्नपात्रलसिता शिवमातृताधुक्॥1609॥

कुर्वन् सर्वमिदं कर्म कामेश्वरमयोऽपि सन्।
देहवान् दृश्यमानोऽपि प्रभू रामेश्वरो हि सः॥1610॥

स्वरूपे विश्वतोभाते शक्तिसम्भरितद्युतिः।
माता जयति संवित्तिर्गुरुशक्तिः सुनिर्मला॥1611॥

जयताज्जननी संविद् ध्येया भक्त्या सते भवन्त्येषा।
विश्वोत्तीर्णा देवी विश्वमयी मातृभूः स्तुत्या॥1612॥

भवनाथस्य सज्ज्येष्ठः सुतः श्रीहारिनन्दनेः।
श्रीरामेश्वरसच्छिष्यः प्रत्यभिज्ञां व्यधाच्छिवाम्॥1613॥

भूमिः सा मिथिला जयत्यतितरां भूत्यै जगज्जन्मिनां
तत्रैवास्ति करेहनाम तटिनी क्ष्मामूर्जयन्तीभृशम्।
तत्तीरे कृतलक्षणोऽस्ति पटसाग्रामो विदामाकरस्
तत्रासीच्छिवभक्तिनिष्ठसुकलोऽस्मद्वंश - भूतिर्गुरुः॥1614॥

स्वामी विश्वगुरुश्चिदात्मबिबुधो देवी - समर्चारतः
सद्विप्रो बुध-मैथिलः सिमरियाधाम्नः सुयोगी महान्।
मातुः सत्कृपया चिरन्तनतमं कुम्भस्थलं लुप्तकम्
प्रारभ्यैष तपोनिधिर्यतिगुरुभ्राता जयेत् सन्ततम्॥1615॥

नृत्यद्भिर्भवभूमिकाभिरनिशं रङ्गेऽत्र भूतैः सह
कालोयं दुरतिक्रमोऽस्ति सकलैः सिद्धैः सुरैर्योगिभिः।
यःकालं कलनामयं स्वजनितं जानाति कालाधिपो
दिव्यः श्रीगुरुसत्प्रमातृहृदयं रामेश्वरो दीव्यति॥1616॥

इति महामहोपाध्याय श्रीरामेश्वरझाकृपापात्रकमलेशझा–
निर्मिता श्रीमातृप्रत्यभिज्ञा पूर्णतामगात्॥

# आत्मवृत्तम्



नाम – विद्यावाचस्पति प्रोफेसर कमलेशझा

जन्मतिथिः – 04-06-1960

पितृनाम – पं0 श्रीभवनाथ झा

[illegible] – आचार्य, [illegible]ए0डी0, डी0लिट्0

पदम् [illegible]ः, धर्मागमविभा[illegible]

[illegible] विद्याधर्मविज्ञानसं[illegible]

[illegible]हिन्दूयूनिवर्सिटी, [illegible]-221005

आवासः – [illegible]/140 A3K [illegible]कुलपुरा

वाराणसी-221010

मो0 – 7376748849

ई-मेल – kamleshjhabhu@gmail.com

ग्रन्थाः – 1. आगम संविद्

2. महामहोपाध्याय-श्रीमदाचार्य-रामेश्वरझारचित-ग्रन्थरत्नस्य

क. श्रीपूर्णताप्रत्यभिज्ञायाः

ख. अहमर्थसंज्ञकस्य

ग. श्रीगुरुस्तुतेः - अनुवादः

3. सम्पादनम् – अनेकग्रन्थानाम्

शोधनिबन्धाः – 30

शोधपर्यवेक्षणम् – 25 शोधप्रबन्धानाम्

प्रियः – स्वाध्यायिनां तपस्विनां च

भक्तः – स्वात्मगुरुशिवानाम्

दासः – अन्नपूर्णा-विश्वेश्वरयोः

प्रकाशकः

शारदा संस्कृत संस्थान

वाराणसी



978-81-941224-0-1

Price : ₹400.00